$$\text{ज्या } ३६^\circ = \frac{१}{२\sqrt{२}}\sqrt{५-\sqrt{५}} \qquad = \text{कोज्या } ५४^\circ ।$$

$$\text{ज्या } ३९^\circ = \frac{\sqrt{३}+१}{८\sqrt{२}}(\sqrt{५}+१) - \frac{\sqrt{३}-१}{८}\sqrt{५-\sqrt{५}}$$

$$= \text{कोज्या } ५१^\circ ।$$

$$\text{ज्या } ४२^\circ = -\frac{१}{८}(\sqrt{५}-१) = \frac{\sqrt{३}}{४\sqrt{२}}\sqrt{५+\sqrt{५}}$$

$$= \text{कोज्या } ४८^\circ ।$$

$$\text{ज्या } ४५^\circ = \frac{१}{\sqrt{२}} \qquad = \text{कोज्या } ४५^\circ ।$$

$$\text{ज्या } ४८^\circ = \frac{\sqrt{३}}{८}(\sqrt{५}-१) + \frac{१}{४\sqrt{२}}\sqrt{५+\sqrt{५}}$$

$$= \text{कोज्या } ४२^\circ ।$$

$$\text{ज्या } ५१^\circ = \frac{\sqrt{३}-१}{८\sqrt{२}}(\sqrt{५}+१) + \frac{\sqrt{३}+१}{८}\sqrt{५-\sqrt{५}}$$

$$= \text{कोज्या } ३९^\circ ।$$

$$\text{ज्या } ५४^\circ = \frac{१}{४}(\sqrt{५}+१) \qquad = \text{कोज्या } ३६^\circ ।$$

$$\text{ज्या } ५७^\circ = -\frac{\sqrt{३}-१}{८\sqrt{२}}(\sqrt{५}-१) + \frac{\sqrt{३}+१}{८}\sqrt{५+\sqrt{५}}$$

$$= \text{कोज्या } ३३^\circ ।$$

$$\text{ज्या } ६०^\circ = \frac{\sqrt{३}}{२} \qquad = \text{कोज्या } ३०^\circ ।$$

$$\text{ज्या } ६३^\circ = \frac{१}{४\sqrt{२}}(\sqrt{५}-१) + \frac{१}{४}\sqrt{५+\sqrt{५}}$$

$$= \text{कोज्या } २७^\circ ।$$

$$\text{ज्या } ६६^\circ = \frac{१}{८}(\sqrt{५}+१) + \frac{\sqrt{३}}{४\sqrt{२}}\sqrt{५-\sqrt{५}}$$

$$= \text{कोज्या } २४^\circ ।$$

$$\text{ज्या } ६९^\circ = \frac{\sqrt{३}+१}{८\sqrt{२}}(\sqrt{५}+१) + \frac{\sqrt{३}-१}{८}\sqrt{५-\sqrt{५}}$$

$$= \text{कोज्या } २१^\circ ।$$

$$\text{ज्या } ७२^\circ = \frac{१}{२\sqrt{२}}\sqrt{५+\sqrt{५}} \qquad = \text{कोज्या } १८^\circ ।$$

$$\text{ज्या } ७५^\circ = \frac{१}{२\sqrt{२}}(\sqrt{३}+१) \qquad = \text{कोज्या } १५^\circ ।$$

$$\text{ज्या } ७८^\circ = \frac{१}{८}(\sqrt{५}-१) + \frac{\sqrt{३}}{४\sqrt{२}}\sqrt{५+\sqrt{५}}$$

$$= \text{कोज्या } १२^\circ ।$$

$$\text{ज्या } ८१^\circ = \frac{१}{४\sqrt{२}}(\sqrt{५}+१) + \frac{१}{४}\sqrt{५-\sqrt{५}}$$

$$= \text{कोज्या } ९^\circ ।$$

$$\text{ज्या } ८४^\circ = \frac{\sqrt{३}}{८}(\sqrt{५}+१) + \frac{१}{४\sqrt{२}}\sqrt{५-\sqrt{५}}$$

$$= \text{कोज्या } ६^\circ ।$$

$$\text{ज्या } ८७^\circ = \frac{\sqrt{३}-१}{८\sqrt{२}}(\sqrt{५}-१) + \frac{\sqrt{३}+१}{८}\sqrt{५+\sqrt{५}}$$

$= \text{कोज्या } ३^\circ$ ।

ज्या ९०° = १  $= \text{कोज्या } ०^\circ$ ।

३२ । अथ कोणीयज्यादीनां सारण्युत्पादनप्रकारः * ।

---

## तृतीयोऽध्यायः ३ ।

अत्र त्रिभुजचतुर्भुजयोर्वृत्तलग्नसमानर्जुबहुभुजक्षेत्रस्य वृत्तस्य च कतिचन गुणाः प्रदर्श्यन्ते ।

३४ । त्रिभुजे त्रयो भुजास्तावन्त एव कोणाश्चेति षडवयवा भवन्तीत्युक्तं प्राक् ।

तत्र त्रयः कोणाः क्रमेण आ, का, गा, एभिर्द्योत्याः स्युः । तत्संमुखकोणाश्च क्रमेण अ, क, ग, एभिः ।

३५ । प्रतित्रिभुजं तत्तद्भुजात् तत्तत्संमुखकोणज्या समानगुणा भवति ।

कल्प्यते आकागा–त्रिभुजस्य आ, का, गा, कोणाः । तथा अ, क, ग, क्रमेण तत्संमुखभुजाः । गा-कोणात् आका-भुजे गा-कोणबिन्दोः गाघा-लम्बः कार्यः ।

(१) गा

आ घा का

तदा ज्याआ $= \frac{\text{गाघा}}{\text{आगा}}$ ।

---

* अस्य प्रकमस्य तथा ३३ प्रकमस्य च केवलं गणिते उपयोगाद्ग्रन्थान्ते तद्दैशद्यं द्रष्टव्यम् ।

ज्याका ज्यागाकाघा, = ( द्वि. क्षे. ) $=\frac{\text{गाघा}}{\text{कागा}}$ ।

$\therefore \frac{\text{ज्याआ}}{\text{ज्याका}}=\frac{\text{कागा}}{\text{आगा}}=\frac{\text{अ}}{\text{क}}$ । $\therefore$ ज्याआ : ज्याका = अ : क

यद्वा अ : ज्याआ = क : ज्याका ।

साजात्यात् अ : ज्याआ = ग : ज्यागा

क : ज्याका = ग : ज्यागा ।

३६ । त्रिभुजे भुजयोगान्तरादितस्तत्संमुखकोणयोगान्तरार्धस्पर्शरेखादिसम्बन्धः प्रदर्श्यते ।

$\therefore$ अ : क = ज्याआ : ज्याका

अ + क : अ − क = ज्याआ + ज्याका : ज्याआ − ज्याका

= २ ज्या $\frac{१}{२}$ (आ + का) कोज्या $\frac{१}{२}$ (आ − का) : २कोज्या $\frac{१}{२}$ (आ + का)

× ज्या $\frac{१}{२}$ (आ − का) $=\frac{\text{ज्या}\frac{१}{२}(\text{आ}+\text{का})}{\text{कोज्या}\frac{१}{२}(\text{आ}+\text{का})}:\frac{\text{ज्या}\frac{१}{२}(\text{आ}-\text{का})}{\text{कोज्या}\frac{१}{२}(\text{आ}-\text{का})}$

= स्प $\frac{१}{२}$ ( आ + का ) : स्प $\frac{१}{२}$ ( आ − का )

यदि भुजयोर्योगेन तयोरन्तरं लभ्यते तदा तत्संमुखकोणयोरेक्याधस्य स्पर्शरेखया तयोरन्तरार्धस्य स्पर्शरेखा लभ्यत इत्यर्थः ।

३७ । त्रिभुजे भुजतत्संमुखकोणसम्बन्धतो ज्यास्पर्शरेखादिसम्बन्धः प्रदर्श्यते ।

यदि गा समकोण स्यात्

तदा ज्याआ $= \frac{\text{कागा}}{\text{आका}} = \frac{\text{अ}}{\text{ग}}$ ।

गा

आ का

कोज्याआ $= \frac{\text{आगा}}{\text{आका}} = \frac{\text{क}}{\text{ग}}$ ।

स्पआ $= \frac{\text{कागा}}{\text{आगा}} = \frac{\text{अ}}{\text{क}}$ । ज्याका $= \frac{\text{आगा}}{\text{आका}} = \frac{\text{क}}{\text{ग}}$ ।

कोज्याका $= \frac{\text{कागा}}{\text{आका}} = \frac{\text{अ}}{\text{ग}}$ । स्पका $= \frac{\text{आगा}}{\text{कागा}} = \frac{\text{क}}{\text{अ}}$ ।

३८ । त्रिभुजे भुजेभ्य इष्टकोणकोटिज्यानयनयुक्तिः प्रदर्श्यते

( ३५ प्रक्रमस्थक्षेत्रं द्रष्टव्यम् )

यदा का कोणो लघुस्तदा
आगा$^2$ = आका$^2$ + कागा$^2$ − २आका . काघा
यदा च का कोणोऽधिकाख्यस्तदा
आगा$^2$=आका$^2$+कागा$^2$+२आका . काघा

एते उन्मिती क्रमेण क्षेत्रमितेर्द्वितीयाध्यायस्य त्रयोदशद्वादशप्रतिज्ञाभ्यां संपद्येते ।

तत्र यदा का कोणो लघुस्तदा,

$$\therefore \frac{\text{काघा}}{\text{कागा}} = \text{कोज्याका} ।$$

$\therefore$ काघा = कागा कोज्याका ।

यदा वा का कोणोऽधिकस्तदा

$$\therefore \frac{\text{काघा}}{\text{कागा}} = \text{कोज्यागा}।\text{काघा} = -\text{कोज्याका}$$

$$\therefore \text{काघा} = -\text{कागा} . \text{कोज्याका}$$

अत उत्थापनेन सिद्धमुभयत्रापि तुल्यमेव ।

$$\because क^2 = ग^2 + अ^2 - २अग . \text{कोज्याका} ।$$

$$\therefore \text{कोज्याका} = \frac{अ^2 + ग^2 - क^2}{२अग} ।$$

$$\text{साजात्यात् कोज्याआ} = \frac{क^2 + ग^2 - अ^2}{२कग} ।$$

$$\text{एवमेव कोज्यागा} = \frac{अ^2 + क^2 - ग^2}{२अक} \text{ ⊛} ।$$

३९ । त्रिभुजे भुजेभ्योऽभीष्टकोणज्यानयनयुक्तिप्रकारः ।

अत्र $\text{ज्या}^2\text{आ} = १ - \text{कोज्या}^2\text{आ}$

$= ( १ + \text{कोज्याआ} )( १ - \text{कोज्याआ} )$

परन्तु $१ + \text{कोज्याआ} = १ + \dfrac{क^2 + ग^2 - अ^2}{२कग}$

$$= \frac{२कग + क^2 + ग^2 - अ^2}{२कग} = \frac{( क^2 + २कग + ग^2 ) - अ^2}{२कग}$$

$$= \frac{(क + ग)^2 - अ^2}{२कग} = \frac{(क + ग + अ)(क + ग - अ)}{२कग} ।$$

---

⊛ अनेन—

"भुजवर्गयुतिर्भूमिवर्गोना भुजघातहृत् ।
दलिता त्रिभुजस्यात्रकोटिज्या भुजसंयुतौ ॥"

इति विशेषोक्तमप्युपपद्यते ।

तथा १-कोज्याआ $= १ - \frac{क^२ + ग^२ - अ^२}{२कग}$

$$= \frac{२कग - क^२ - ग^२ + अ^२}{२कग} = \frac{अ^२ - ( क^२ - २कग + ग^२ )}{२कग}$$

$$= \frac{अ^२ - ( क - ग )^२}{२कग} = \frac{( अ + क - ग )( अ - क + ग )}{२कग} ।$$

अथ यदि कल्प्येत $२स = अ + क + ग$

तदा $२( स - अ ) = अ + क + ग - २अ = क + ग - अ$ ।

$२( स - क ) = अ + क + ग - २क = अ + ग - क$ ।

$२( स - ग ) = अ + क + ग - २ग = अ + क - ग$ ।

$$\therefore १ + कोज्याआ = \frac{२स \times २( स - अ )}{२कग} = \frac{२स( स - अ )}{२कग}$$

$$तथा\ १\text{-}कोज्याआ = \frac{२( स - क ) \times २( स - ग )}{२कग}$$

$$= \frac{२( स - क )( स - ग )}{२कग} ।$$

अत एव $ज्या^२आ = \frac{४}{क^२.ग^२} स( स - अ )( स - क )( स - ग )$ ।

$$\therefore ज्याआ = \frac{२}{क.ग} \sqrt{स( स - अ )( स - क )( स - ग )}$$

अत्र मानस्य ऋणत्वं न संभवति त्रिभुजैककोणस्य समकोण-द्वयाल्पत्वात् तज्ज्याया धनत्वात् ।

$$\text{साजात्यात् ज्याक} = \frac{२}{\text{अग}}\sqrt{\text{स}(\text{स}-\text{अ})(\text{स}-\text{क})(\text{स}-\text{ग})}\ ।$$

$$\text{ज्याग} = \frac{२}{\text{अक}}\sqrt{\text{स}(\text{स}-\text{अ})(\text{स}-\text{क})(\text{स}-\text{ग})}\ ।$$

४०। त्रिभुजे भुजेभ्य इष्टकोणार्धज्याकोटिज्यास्पर्शरेखाणां मानं प्रदर्श्यते।

$$\because २\text{ज्या}^२\tfrac{१}{२}\text{आ} = १ - \text{कोज्याआ} = \frac{२(\text{स}-\text{क})(\text{स}-\text{ग})}{\text{कग}}\ ।$$

$$\therefore \text{ज्या}\tfrac{१}{२}\text{आ} = \sqrt{\frac{(\text{स}-\text{क})(\text{स}-\text{ग})}{\text{कग}}}\ ।$$

$$\because २\text{कोज्या}^२\tfrac{१}{२}\text{आ} = १ + \text{कोज्याआ} = \frac{२\text{स}(\text{स}-\text{अ})}{\text{कग}}\ ।$$

$$\therefore \text{कोज्या}\tfrac{१}{२}\text{आ} = \sqrt{\frac{\text{स}(\text{स}-\text{अ})}{\text{कग}}}\ ।$$

$$\text{अत एव स्प}\tfrac{१}{२}\text{आ} = \frac{\text{ज्या}\tfrac{१}{२}\text{आ}}{\text{कोज्या}\tfrac{१}{२}\text{आ}} = \sqrt{\frac{(\text{स}-\text{क})(\text{स}-\text{ग})}{\text{स}(\text{स}-\text{अ})}}\ ।$$

अत्राप्युन्मितीनां धनत्वमेव बोध्यम्।

$$\text{साजात्यात् ज्या}\tfrac{१}{२}\text{का} = \sqrt{\frac{(\text{स}-\text{अ})(\text{स}-\text{ग})}{\text{अग}}}\ ।$$

$$\text{ज्या}\tfrac{१}{२}\text{गा} = \sqrt{\frac{(\text{स}-\text{अ})(\text{स}-\text{क})}{\text{अक}}}\ ।$$

$$\text{कोज्या}\tfrac{1}{2}\text{का} = \sqrt{\frac{\text{स}(\text{स}-\text{क})}{\text{अग}}}\text{ । कोज्या}\tfrac{1}{2}\text{गा} = \sqrt{\frac{\text{स}(\text{स}-\text{ग})}{\text{अक}}}$$

$$\text{स्प}\tfrac{1}{2}\text{का} = \sqrt{\frac{(\text{स}-\text{अ})(\text{स}-\text{ग})}{\text{स}(\text{स}-\text{क})}}\text{ ।}$$

$$\text{स्प}\tfrac{1}{2}\text{गा} = \sqrt{\frac{(\text{स}-\text{अ})(\text{स}-\text{क})}{\text{स}(\text{स}-\text{ग})}}\text{ ।}$$

४१ । त्रिभुजे भुजेभ्यः क्षेत्रफलानयनयुक्तिप्रकारः प्रदर्श्यते ।
यतो रेखागणितस्य द्वितीयाध्यायतो लम्बगुणं भूम्यर्धं खलु त्रिभुज-क्षेत्रफलं भवति ।

$\therefore$ आकाग-त्रिभुजफलम् $= \frac{1}{2}$ आका $\times$ गाघा

$$= \tfrac{1}{2}\text{ आका} \times \text{आगा} \times \frac{\text{गाघा}}{\text{आगा}} = \tfrac{1}{2}\text{ आका} \times \text{आगा} \times \text{ज्याआ}$$

$$= \frac{\text{कग}}{2} \cdot \frac{2}{\text{कग}} \sqrt{\text{स}(\text{स}-\text{अ})(\text{स}-\text{क})(\text{स}-\text{ग})}$$

$$= \sqrt{\text{स}(\text{स}-\text{अ})(\text{स}-\text{क})(\text{स}-\text{ग})}\text{ ।}$$

अत एवार्यभटः—

"सर्वभुजैक्यं दलितं चतुःस्थितं वाहुभिः क्रमाद्रहितम् ।
तद्घातपदं त्रिभुजे क्षेत्रे स्पष्टं फलं भवति ॥"

४२ । (अनु० १) $\because$ त्रिभुजफलम्
$= \frac{1}{2}$ आका $\times$ आगा $\times$ ज्याआ, इति पूर्वप्रक्रमे सिद्धम् ।

∴ त्रिभुजे भुजयोर्घातार्धं भुजान्तर्गतकोणज्यया गुणितं क्षेत्रफलं भवतीत्यवगम्यते ।

४३ । ( अनु० २ ) त्रिभुजे पूर्वोक्तप्रक्रमैर्लम्बाबाधावगमः सुगमः ।

$$\because \text{कोज्याअ} = \left(\frac{\text{आघा}}{\text{क}}\right) = \frac{\text{क}^2 + \text{ग}^2 - \text{अ}^2}{2\text{कग}}$$

$$\therefore \text{आघा} = \frac{\text{क}^2 + \text{ग}^2 - \text{अ}^2}{2\text{ग}} \text{ ।}$$

$$\because \text{कोज्याका} = \pm \left(\frac{\text{काघा}}{\text{अ}}\right) = \frac{\text{अ}^2 + \text{ग}^2 - \text{क}^2}{2\text{अग}}$$

$$\therefore \text{काघा} = \pm \frac{\text{अ}^2 + \text{ग}^2 - \text{क}^2}{2\text{ग}} \text{ ।}$$

अत्र लम्बो यथा त्रिभुजस्यान्तर्बहिर्वा निपतेत् तदनुसारेण द्वितीयाबाधाया धनर्णत्वं बोध्यम् ।

$$\because \text{ज्याअ} = \left(\frac{\text{गाघा}}{\text{क}}\right) = \frac{2}{\text{कग}} \sqrt{\text{स}(\text{स}-\text{अ})(\text{स}-\text{क})(\text{स}-\text{ग})} \text{ ।}$$

$$\therefore \text{गाघा} = \frac{2}{\text{ग}} \sqrt{\text{स}(\text{स}-\text{अ})(\text{स}-\text{क})(\text{स}-\text{ग})} \text{ ।}$$

४४ । त्रिभुजस्य भुजेभ्यस्तदन्तर्बहिर्लग्नयोर्वृत्तयोर्व्यासार्धानयनं प्रदर्श्यते ।

(१) तत्रादौ त्रिभुजान्तर्लग्नवृत्तव्यासार्धानयनम् ।

गा
क
अ
के
आ
ग
क

यदि आकागा-त्रिभुजान्तर्लग्न-वृत्तस्य केन्द्रं (के) कल्प्येत तदा केअ = केक = केग = व्यासार्धं = (व) ।

अथ ∵ फ = △ आकेका + △ काकेगा + △ आकेगा

$$= \frac{१}{२} ग.व + \frac{१}{२} अ.व + \frac{१}{२} क.व = \frac{अ + क + ग}{२} व = स.व ।$$

$$\therefore व = \frac{फ}{स} = \frac{\sqrt{स(स - अ)(स - क)(स - ग)}}{स} ।$$

(२) त्रिभुजबहिर्लग्नवृत्तव्यासार्धानयनम् ।

यदि आकागा-त्रिभुजबहिर्लग्नवृत्तस्य केन्द्रं (के) कल्प्येत तदा केआ = केका = केगा = व्यासार्धं = (वा)। अथ समानभूमौ वर्त्तमानयोः केन्द्रपरिधिलग्नयोः कोणयोरायोऽन्यतो द्विगुणो भवत्यतः (४२ प्रक्रमतः)

फ = ½ अ.फ . ज्या ½ आकेका * ।

---

* अनेन—
"भुजमध्यगता जीवा क्षुण्णा दोष्णोर्वधेन सा ।
दलिता त्रिभुजस्य स्यात् फलं वाऽन्यप्रकारतः ॥"
इति विनोदोऽप्युपपद्यते ।

परन्तु ज्या $\frac{1}{2}$ आकेका $= \frac{\frac{1}{2} \text{आका}}{\text{आके}} = \frac{\text{ग}}{२\text{वा}}$ ।

$\therefore$ फ $= \frac{\text{अ.क.ग}}{४\text{वा}}$ $\therefore$ वा $= \frac{\text{अ.क.ग}}{४\text{फ}}$

$$= \frac{\text{अ.क.ग}}{४\sqrt{\text{स}(\text{स}-\text{अ})(\text{स}-\text{क})(\text{स}-\text{ग})}} ।$$

अस्मादिदमवगम्यते-त्रिभुजे कोणस्य ज्या तत्कोणसंमुखभुजात् त्रिभुजबहिर्लग्नवृत्तव्यासाप्तेन तुल्या भवतीति ।

४५ । ( अनुमा० १ ) यदि आकागा त्रिभुजे गा-कोणात् आका-भूमौ लम्बः ( ल ) क्रियते तदा फ $= \frac{1}{2}$ ग.ल ।

अथ पूर्वप्रक्रमतः सिद्धम् फ $= \frac{\text{अ.क.ग}}{४\text{वा}}$ ।

$\therefore$ $\frac{1}{2}$ग ल $= \frac{\text{अ.क.ग}}{४\text{वा}}$ $\therefore$ वा $= \frac{\text{अ.क}}{२\text{ल}}$ ।

अत एव सिद्धान्तविषयकक्रोडग्रन्थे मयोक्तम् ।

"त्रिबाहुकबहिर्लग्नवृत्तव्यासदलं किल ।

भुजयोराहतः खण्डाल्लम्बाप्तेन समं भवेत्"-इति ।

४६ । ( अनु० २ ) ।

$\because$ फ $= \frac{\text{अ}+\text{क}+\text{ग}}{२}$व $= \frac{\text{अ.क.ग}}{४\text{वा}}$ $\therefore$ २वाव $= \frac{\text{अ.क.ग}}{\text{अ}+\text{क}+\text{ग}}$ ।

अस्मादिदमवगम्यते – त्रिभुजे त्रयाणां भुजानां घातात् तद्योगेनाप्तं त्रिभुजान्तर्बहिर्लग्नवृत्तव्यासाधयोर्घातेन द्विगुणेन तुल्यं भवतीति ।

## ४७। अथ वृत्तान्तर्गतचतुर्भुजस्य भुजेभ्यस्तत्कोणकर्णफलादीनामानयनम्।

कल्प्यते आका = अ, कागा = क, गाघा = ग, घाआ = घ, काघा = च, आगा = छ।

(१) अतः (३८ प्रक्रमत:)

$$\text{कोज्याआ} = \frac{\text{अ}^2 + \text{घ}^2 - \text{च}^2}{2\text{अघ}}$$

$$\text{कोज्यागा} = \frac{\text{क}^2 + \text{ग}^2 - \text{च}^2}{2\text{कग}}\ ।$$

$$\therefore \text{च}^2 = \text{अ}^2 + \text{घ}^2 - 2\text{अघ}.\text{कोज्याआ}$$
$$= \text{क}^2 + \text{ग}^2 - 2\text{कग}\ .\ \text{कोज्यागा}$$

परन्तु क्षेत्रमितेस्तृतीयाध्यायस्यैकविंशप्रतिज्ञया

$$\text{कोज्याआ} = \text{कोज्या}\ (180^\circ - \text{गा}) = -\ \text{कोज्यागा}$$

$$\therefore \text{आ}^2 + \text{घ}^2 - 2\text{अघ}\ .\ \text{कोज्याआ} = \text{क}^2 + \text{ग}^2 + 2\text{कग}\ .\ \text{कोज्याआ},$$

$$\therefore\ \text{कोज्याआ} = \frac{\text{अ}^2 + \text{घ}^2 - \text{क}^2 - \text{ग}^2}{2(\text{अघ} + \text{कग})} = -\text{कोज्यागा}$$

$$\text{साजात्यात् कोज्याका} = \frac{\text{अ}^2 + \text{क}^2 - \text{ग}^2 - \text{घ}^2}{2(\text{अक} + \text{गघ})} = -\ \text{कोज्याघा}\ ।$$

(२) अत. ३९ प्रक्रमोक्तयुक्त्या—

$$\text{ज्याआ} = \frac{2}{\text{अघ} + \text{कग}} \sqrt{(\text{स}-\text{अ})(\text{स}-\text{क})(\text{स}-\text{ग})(\text{स}-\text{घ})}$$

(अत्र $\text{स} = \frac{\text{अ}+\text{क}+\text{ग}+\text{घ}}{2}$ इति बोध्यम्)

( ३ ) ४० प्रक्रमोक्तयुक्त्या

$$ज्या\tfrac{1}{2}आ = \sqrt{\frac{(स-अ)(स-घ)}{अघ+कग}} = कोज्या\tfrac{1}{2}गा$$

$$कोज्या\tfrac{1}{2}आ = \sqrt{\frac{(स-क)(स-ग)}{अघ+कग}} = ज्या\tfrac{1}{2}गा$$

$$स्प\tfrac{1}{2}आ = \sqrt{\frac{(स-अ)(स-घ)}{(स-क)(स-ग)}} = कोस्प\tfrac{1}{2}गा$$

( ४ ) $\because \frac{अ^2+घ^2-च^2}{२अघ} = -\frac{क^2+ग^2-च^2}{२कग}$

$$\therefore च^2 = \frac{(अग+कघ)(अक+गघ)}{अघ+कग}$$

$$साजात्यात्\ छ^2 = \frac{(अग+कघ)(अघ+कग)}{अक+गघ}$$

एतेन,

"कर्णाश्रितभुजघातैक्यमुभयथाऽन्योन्यभाजितं गुणयेत् ।
योगेन भुजप्रतिभुजवधयोः कर्णौ पदे विषमे ॥"

इति ब्रह्मगुप्तोक्तं वृत्तान्तर्गतविषमचतुर्भुजपरमित्यवगम्यते ।

( ५ ) अत एव चछ = अग + कघ, तथा $\frac{च}{छ} = \frac{अक + गघ}{अघ + कग}$

अतो मत्कृतक्रोडग्रन्थे—

"वृत्तान्तःस्थचतुर्बाहुक्षेत्रे श्रवणयोर्हतिः ।
भुजप्रतिभुजाहत्योः समासेन समा भवेत् ॥"

(६) (आकागाघा) चतुर्भुजफलम् $= \triangle$ आकाघा $+ \triangle$ कागाघा।
$= \frac{1}{2}$ अघ . ज्याआ $+ \frac{1}{2}$ कग . ज्याआ $= \frac{1}{2}$ (अघ + कग)ज्याआ
$= \sqrt{(स-अ)(स-क)(स-ग)(स-घ)}$

अत. श्रीपति —

"भुजसमासदलं हि चतुःस्थितं निजभुजैः क्रमशः पृथगूनितम् ।
अथ परस्परमेव समाहतं कृतिपदं त्रिचतुर्भुजयोः फलम् ॥"

(७) यदि (आकाघा) त्रिभुजलग्नवृत्तस्य व्यासार्धं (वा) कल्प्येत

तदा (४४ प्रक्रमत) $वा = \frac{अघच}{४ \triangle आकाघा}$

परन्तु $\triangle$ आकाघा $= \frac{1}{2}$ अघ ज्याआ

$\therefore वा = \frac{अघच}{२अघ\ ज्याआ} = \frac{च}{२ज्याआ} = \frac{च}{२ज्यागा}$ ।

$\therefore वा = \frac{छ}{२ज्याका} = \frac{छ}{२ज्याघा}$ ।

$$ज्याआ = \frac{२}{अघ + कग}\sqrt{(स-अ)(स-क)(स-ग)(स-घ)}$$

$$\therefore वा = \frac{च}{२ज्याआ} = \frac{च\ (अघ + कग)}{४\sqrt{(स-अ)(स-क)(स-ग)(स-घ)}}$$

$$= \frac{1}{४}\sqrt{\frac{(अक+गघ)(अग+कघ)(अघ+कग)}{(स-अ)(स-क)(स-ग)(स-घ)}}$$

अस्मादिदमवगम्यते विषमचतुर्भुजमात्र वृत्तान्त र्फ्तुं शक्यते। अथ च भुजाना क्रमव्यत्यासेऽपि न क्षेत्रफले विकार किन्तु कोणा-

द्विव्येव । अत्र यदि घ = ० कल्प्येत तदा कोणादीनां मानानि पूर्वसाधितैस्त्रिभुजकोणादीनां मानैरभिन्नानि संपद्यन्ते ।

## ४८ । विषमचतुर्भुजमात्रस्यान्योन्यसंमुखकोणद्वयविशिष्टेभ्यो भुजेभ्यः फलानयनम् ।

अत्र पूर्वप्रक्रमस्थक्षेत्रं द्रष्टव्यम् ।

तत्र यदि क्षेत्रफलद्योतकं ( फ ) कल्प्येत तदा

$$फ = \frac{1}{2} ( अघ \,.\, ज्याआ + कग \,.\, ज्यागा )$$

$$\text{परन्तु } कोज्याआ = \frac{अ^2 + घ^2 - च^2}{2अघ},\; कोज्यागा = \frac{क^2 + ग^2 - च^2}{2कग}$$

$$\therefore \quad 1 + कोज्याआ = \frac{(अ + घ)^2 - च^2}{2अघ} \quad (1)$$

$$1 - कोज्याआ = \frac{च^2 - (अ - घ)^2}{2अघ} \quad (2)$$

$$1 + कोज्यागा = \frac{(क + ग)^2 - च^2}{2कग} \quad (3)$$

$$1 - कोज्यागा = \frac{च^2 - (क - ग)^2}{2कग} \quad (4)$$

ततः ( १ ) ( ४ ) आभ्यां सिद्धौ पक्षौ

$$(अ + घ)^2 - (क - ग)^2 = 2अघ (1 + कोज्याआ) + 2कग (1 - कोज्यागा)$$

$$\text{वा } (स - क)(स - ग) = अघ \,.\, \frac{1 + कोज्याआ}{2} + कग \,.\, \frac{1 - कोज्यागा}{2}$$

$=$ *अघ . कोज्या$^2\frac{1}{2}$आ + कोज्या$^2\frac{1}{2}$गा (५)

एवमेव (२) (३) आभ्यां सिद्धौ पक्षौ

(स − अ)(स − घ) = अघ . ज्या$^2\frac{1}{2}$आ + कग . कोज्या$^2\frac{1}{2}$गा (६)

एवम् (५) (६) अनयोर्गुणनात्

(स − अ)(स − क)(स − ग)(स − घ)

= अ$^2$घ$^2$.ज्या$^2\frac{1}{2}$आ.कोज्या$^2\frac{1}{2}$आ+अकगघ.कोज्या$^2\frac{1}{2}$आ.कोज्या$^2\frac{1}{2}$गा
+ क$^2$ग$^2$ . ज्या$^2\frac{1}{2}$गा . कोज्या$^2\frac{1}{2}$गा + अकगघ . ज्या$^2\frac{1}{2}$आ . ज्या$^2\frac{1}{2}$गा †

= (अघ . ज्या$\frac{1}{2}$आ . कोज्या$\frac{1}{2}$आ + कग . ज्या$\frac{1}{2}$गा . कोज्या$\frac{1}{2}$गा)$^2$
+ अकगघ (कोज्या$\frac{1}{2}$आ . कोज्या$\frac{1}{2}$गा − ज्या$\frac{1}{2}$आ . ज्या$\frac{1}{2}$गा)$^2$,

= $\frac{1}{4}$(अघ . ‡ज्याआ + कग . ज्यागा)$^2$ + अकगघ . कोज्या$\frac{1}{2}$(आ+गा)

= फ$^2$ + अकगघ . कोज्या$^2\frac{1}{2}$ (आ + गा)

∴ फ = $\sqrt{\text{(स−अ)(स−क)(स−ग)(स−घ)−अकगघ . कोज्या}^2\frac{1}{2}\text{(आ+गा)}}$

अथ ∵ आ+का+गा+घा=३६०° ∴ $\frac{1}{2}$ (आ+गा)=१८०°−$\frac{1}{2}$(का+घा)

---

* अत्र $\frac{१ + \text{कोज्याआ}}{२}$ = कोज्या$^2\frac{1}{2}$आ, एतदर्थं (२४) प्रक्रमो द्रष्टव्यः ।

† अत्र २अकगघ . ज्या$\frac{1}{2}$आ . कोज्या$\frac{1}{2}$आ . ज्या$\frac{1}{2}$गा . कोज्या$\frac{1}{2}$गा एतत्तुल्यं धनमृणं च क्रियते तथाऽप्यविकार एव ।

‡ २ज्याआ . कोज्याआ = २ज्या२आ । अत्र २आ − स्थाने (आ) अनेनोत्थाप्यते तदा २ज्या$\frac{1}{2}$आ . कोज्या$\frac{1}{2}$आ = ज्याआ ।

∴ ज्या$\frac{1}{2}$आ कोज्या$\frac{1}{2}$आ = $\frac{\text{ज्याआ}}{२}$

∴ अघ . ज्या$\frac{1}{2}$आ . कोज्या$\frac{1}{2}$आ = $\frac{\text{अघ . ज्याआ}}{२}$ इतोऽग्रे स्फुटम् ।

$\therefore$ कोज्या$^2\frac{1}{2}$ (आ + गा) = कोज्या$^2\frac{1}{2}$ (का + घा) । अत इदं फलं संमुखकोणद्वययोरन्यतरेण विशिष्टेभ्यश्चतुर्भ्यो भुजेभ्यः सम्पन्नम्।

तत्र यदि आ + गा = का + घा = १८०°

तदा कोज्या$^2\frac{1}{2}$ (आ + गा)=कोज्या$^2\frac{1}{2}$ ( का + घा ) = ०

अतोऽत्र फ = $\sqrt{(स - अ)(स - क)(स - ग)(स - घ)}$

पूर्वसाधितेन वृत्तान्तर्गतचतुर्भुजमानेनाभिन्नं जातम् ।

अत एव विषमचतुर्भुजस्यानेकविधेषु फलेषु वृत्तान्तर्गतस्य तस्य फलं महत्तमं भवति । इदमेव पूर्वाचार्यैः स्वग्रन्थेषु साधितम् ।

४९ । वृत्तान्तर्गतस्य समानर्जुबहुभुजक्षेत्रस्य परिधिफलयोरानयनयुक्तिप्रकारः ।

अत्र किल (क) वृत्तकेन्द्रं स्यात् तदन्तर्गतस्य समानर्जु - (न) संख्याकभुजक्षेत्रस्य भुजः = अग, ( व ) = वृत्तस्य व्यासार्धं स्यात् तदा कअ, कग रेखे संयोज्य अग-रेखोपरि कव लम्बः कार्यः ।

अत्र ∠ अकग = $\frac{३६०°}{न}$

बहुभुजक्षेत्रपरिधिश्च = न . अग= २न . अब

= २न . अक . ज्या ∠ अकब = २न . व . ज्या $\frac{१८०°}{न}$

एवं बहुभुजक्षेत्रफलम् = न . अकगक्षेत्रम् = न . $\frac{\text{अग . कय}}{२}$

= न . अक . ज्याअकय×अक . कोज्या ∠ अकय

= नव² . ज्या $\frac{१८०^\circ}{\text{न}}$ कोज्या $\frac{१८०^\circ}{\text{न}}$ ।

अस्मादिदमवगम्यते येषां समानर्जुबहुभुजक्षेत्राणां भुजसंख्या समाना भवेत् तेषु तत्तत्क्षेत्रपरिधिस्तत्तत्क्षेत्रबहिर्लग्नवृत्तव्यासार्धात् समानगुणो भवति । तत्तत्क्षेत्रफलं च तत्तत्क्षेत्रबहिर्लग्नवृत्तव्यासार्धवर्गात् समानगुणं भवतीति ।

## ५० । वृत्तबहिर्लग्नस्य ऋजुसमबहुभुजक्षेत्रस्य परिधिफलयोरानयनयुक्तिप्रकारः ।

अत्र किल वृत्त बहिर्लग्न( न )संख्याकर्जुभुजक्षेत्रस्य अग-भुजः यस्थाने परिधौ लग्नः ।

बहिर्लग्नबहुभुजक्षेत्रपरिधिः = न . अग= २न . अय

= २न . कय . स्पअकय = २नव . स्प $\frac{१८०^\circ}{\text{न}}$

∴ क्षेत्रफलम् = न . अकगक्षेत्रफलम्

= न × $\frac{\text{अग . कय}}{२}$ = न . कय स्प∠ अकय × कय

= न . व² . स्प $\frac{१८०^\circ}{\text{न}}$ ।

अस्मादिदमवगम्यते येषां समानर्जुबहुभुजक्षेत्राणां भुजसंख्या समाना भवेत् तेषु तत्तत्क्षेत्रपरिधिस्तत्तत्क्षेत्रान्तर्लग्नवृत्तव्यासार्धात् समानगुणो भवति तत्तत्क्षेत्रफलं च तत्तदन्तर्लग्नवृत्तव्यासार्धवर्गात् तुल्यगुणं ❀ भवतीति ।

५१ । (व)–व्यासार्धविशिष्टस्य वृत्तस्यान्तर्बहिश्च लग्नयोः समानर्जु-(न)संख्याकभुजक्षेत्रयोः क्रमेण परिधी किल (प) (पा) इति स्यातां फले च (फ) (फा) इति स्याताम् ।

$$\text{तदा } \frac{\text{प}}{\text{पा}} = \frac{\text{२नव . ज्या}\frac{१८०^\circ}{\text{न}}}{\text{२नव . स्प}\frac{१८०^\circ}{\text{न}}} = \text{कोज्या}\frac{१८०^\circ}{\text{न}}$$

$$\text{तथा } \frac{\text{फ}}{\text{फा}} = \frac{\text{नव}^२\text{ . ज्या}\frac{१८०^\circ}{\text{न}}\text{कोज्या}\frac{१८०^\circ}{\text{न}}}{\text{नव}^२\text{ . स्प}\frac{१८०^\circ}{\text{न}}} = \text{कोज्या}^२\frac{१८०^\circ}{\text{न}}$$

अत्र यदि न = ∞ स्यात्

$$\text{तदा } \frac{\text{प}}{\text{पा}} = \text{कोज्या } \frac{१८०^\circ}{\infty} = \text{कोज्या } ०^\circ = १$$

$$\text{तथा } \frac{\text{फ}}{\text{फा}} = \text{कोज्या}^२ \frac{१८०^\circ}{\infty} \text{ कोज्या}^२ ०^\circ = १$$

∴ प = पा तथा फ = फा भवेत् ।

---

❀ इदमेव क्षेत्रमितेर्द्वादशाध्यायस्य १-२ प्रतिज्ञाभ्यामपि सम्पद्यते ।

अत एव वृतान्तर्बहिर्लग्नबहुभुजक्षेत्रयोर्भुजसंख्या यथायथाऽधिका स्यात् तथातथा ते क्षेत्रे प्रत्येकं तद्वृत्तक्षेत्रासन्ने भवेताम् । तथा च भुज-संख्याया आनन्त्ये ते वृत्तक्षेत्रे भूत्वा सर्वांशैर्मिथो मिलेताम् । अत एव तत्तद्वृत्तपरिधिस्तत्तद्वृत्तव्यासार्धात् समानगुणो भवति तत्तद्वृत्तफलं च तत्तद्वृत्तव्यासार्धवर्गात् समानगुणं भवतीत्यवगम्यते ।

## ५२ । अथ वृत्तक्षेत्रस्य परिधिफलयोरानयनयुक्तिप्रकारः ।

(१) तत्र किल वृत्तान्तर्गतबहुभुजक्षेत्रपरिधिः $= २नव.ज्या \frac{१८०^\circ}{न}$ ।

अत्र यथायथा न–संख्याऽधिका स्यात् तथातथाऽयं परिधिर्वृत्त-परिधेरासन्नतरो भवेदित्यत एव पूर्वम् $\left(ज्या\frac{१८०^\circ}{न}\right)$ अस्य तथा मानं साध्यते यथाऽत्र न–संख्या महती स्यात् ।

तथा हि ∵ ( २४ ) प्रक्रमस्थात् ( फा ) तः

$$कोज्या\frac{आ}{२} = \frac{१}{\sqrt{२}}\sqrt{१ + कोज्याआ} ⊛$$

$$\therefore\ कोज्या\frac{९०^\circ}{२} = \frac{१}{\sqrt{२}}$$

$$एवम्\ कोज्या\frac{९०^\circ}{२^२} = \frac{१}{\sqrt{२}}\sqrt{१ + \frac{१}{\sqrt{२}}}$$

---

⊛ अत्र यदि $आ = ९०^\circ, \frac{९०^\circ}{२}, \frac{९०^\circ}{२^२}$ इत्यादि कल्प्यते तदाऽधः-स्थितस्वरूपाणि जायन्ते ।

$$कोज्या\frac{९०^\circ}{२^३} = \frac{१}{\sqrt{२}}\sqrt{१+\frac{१}{२}\sqrt{१+\frac{१}{\sqrt{२}}}}$$

एवममेऽपि

अनया युक्त्या कोज्या $\frac{९०^\circ}{२^प}$ अस्य तथा मानं गणयितुं शक्यते यथाऽत्र ( प ) संख्या महती स्यात्। तथा च यदि न = $२^प$ कल्प्येत

$$तदा\ ज्या\frac{१८०^\circ}{न} = २कोज्या\frac{९०^\circ}{२^प}\cdot ज्या\frac{९०^\circ}{२^प}$$

$$= २कोज्या\frac{९०^\circ}{२^प}\sqrt{१-कोज्या^२\frac{९०^\circ}{२^प}}\ आसन्नं\ स्यात्।$$

एवमानीतं ज्या $\frac{१८०^\circ}{न}$ अस्य मानं न-संख्यया गुणितं सत् ३.१४१५९२६५ ··· ··· ··· इत्यादि भवति। इदम् * π अनेन द्योत्यं स्यात्। तथा सति वृत्तपरिधिः = २πव।

( २ ) अनन्तरोक्तप्रक्रमे सङ्केतितयोः ( प ) ( फ ) वर्णयोः क्रमेण

मानं २नव. ज्या $\frac{१८०^\circ}{न}$, नव$^२$. ज्या $\frac{१८०^\circ}{न}$, कोज्या $\frac{१८०^\circ}{न}$।

$$\frac{फ}{प} = \frac{नव^२.\ ज्या\frac{१८०^\circ}{न}.\ कोज्या\frac{१८०^\circ}{न}}{२नव\ .\ ज्या\frac{१८०^\circ}{न}} = \frac{१}{२}व.कोज्या\frac{१८०^\circ}{न}।$$

---

* π इदं 'ग्रीक'-वर्णमालायां 'पाई' इत्युच्चार्यते।

अथ वृत्तरूपे बहुभुजक्षेत्रे $न = \infty$ । अत एव कोज्या $\frac{१८०^\circ}{न}$

$= कोज्या\ ०^\circ = १$ ।

$\therefore$ वृत्ते $\frac{फ}{प} = \frac{१}{२} व. \because .फ = \frac{१}{२} व.प$ ।

अथ च पूर्वसिद्धम् $प = २\pi व$

$\therefore .फ = \pi व^२$ ।

(३) एवम् अकव-वृत्तखण्ड-स्यापि फलं शीघ्रमवगम्यते । ('पार्श्वस्थं क्षेत्रं द्रष्टव्यम्) तथा हि-अत्र किल अव-चाप-दैर्घ्यम् = अ । व्यासार्धम् = व, तथा च क्षेत्रमितेः षष्ठाध्यायस्य त्रयस्त्रिंशप्रतिज्ञया-

अकव-वृत्तखण्डम् : अगघच ⊙ : : अ : २πव

$$\therefore \text{ अकव-वृत्तखण्डम्} = \frac{अ}{२\pi व} \times \text{अगघच} \odot$$

$$= \frac{अ}{२\pi व} \times \pi व^२ = \frac{१}{२} अव ।$$

(४) अव-चापस्य यम-जीवा, अन-स्पर्शरेखा स्यात् । तत्र यदि अय-रेखा क्रियते तदा अकव-वृत्तखण्डम्, अकय-त्रिभुजाद-धिकम् अकन-त्रिभुजाद्धीनं भवेत् ।

$\because \frac{१}{२}$अक . अव $>$ $\frac{१}{२}$अक . यम $<$ $\frac{१}{२}$अक . अन

$\therefore$ अव $>$ यम $<$ अन ।

अतः अकब-लघुकोणसंमुखचापम् अब-स्वज्यातोऽधिकं स्वस्पर्शरेखातश्च न्यूनं भवति तदेव विलिख्य प्रदर्श्यते

$$\text{अ} > \text{ज्याअ} < \text{स्पअ}\text{ ।}$$

तत्र यदि अ = ० स्यात् तर्हि

$$\frac{\text{ज्याअ}}{\text{स्पअ}} = \frac{\text{कोज्याअ}}{\text{व}} = \frac{\text{कोज्या}0^\circ}{\text{व}} = \frac{\text{व}}{\text{व}} = १$$

अस्मादिदमनुमीयते । चापस्यात्यन्तह्रासे तज्ज्यास्पर्शरेखे मिथस्तुल्ये भवतः । अत एव ते प्रत्येकं स्वचापेन समे स्याताम् ।

$$\text{तथा } \frac{\text{ज्याअ}}{\text{अ}} = \frac{\text{स्पअ}}{\text{अ}} = १\text{, एवं सिध्यति ।}$$

५३ । रूपव्यासार्धे चापस्य या जीवादयस्ता एव तच्चापसम्बन्धिकोणस्यापि भवन्तीति पूर्वं प्रदर्शितम् । (१४ प्र. द्र.) तत्र यच्चापदैर्घ्यमानं तदेव तत्सम्बन्धिकोणस्य स्यात् तच्च तस्य कोणस्य चापीयं मानमुच्यते । बीजक्रियया सम्पाद्यमाने त्रिकोणमितिगणिते कोणस्य चापीयमानमेव गृह्यते ।

अथ यदि ( व ) व्यासार्धे ( २$\pi$व ) अयं पूर्वसिद्धः परिधिस्तदा रूपव्यासार्धे क इत्यनुपातेनाप्तं ( २$\pi$ ) रूपव्यासार्धे परिधिदैर्घ्यम् ।

अतः $\pi$ = * ३. १४१५९२६५ इत्यादिकं रूपव्यासार्धेऽर्धपरिधिमानं समकोणद्वयस्य चापीयं मानं स्यात् ।

तथा च यस्य कोणस्य चापीयं मानं रूपं स्यात् तस्य

$$\frac{१८०^\circ}{३.१४१५९\text{ इ.}} = ५७.२९५७\text{ इ०} = ५७^\circ । १७' । ४४''. ६\text{ इत्या-}$$

द्यंशादिमानं भवेत् । अस्मान्निर्दिष्टकोणस्यांशादिमानाच्च तत्कोणसंबन्धिचापदैर्घ्यावगमः सुगमः ।

---

* एतदर्थं लीलावत्यन्ते श्रीमद्गुरुकृता टिप्पण्यवलोक्या ।

अथ

# परीक्षार्थिजनोपकारार्थं

## ( २९ ) प्रक्रमोक्तप्रश्नानामुत्तराणि ।

(१) $ज्याअ^2 = १ - कोज्या^2अ \therefore ज्याअ = \sqrt{१ - कोज्या^2अ}$ ।

$$ज्याअ = \frac{ज्याअ.कोज्याअ}{कोज्याअ} = कोज्याअ.स्पअ ।$$

$$ज्याअ = \frac{ज्याअ \times \frac{१}{कोज्याअ}}{\frac{१}{कोज्याअ}} = \frac{\frac{ज्याअ}{कोज्याअ}}{\frac{१}{कोज्याअ}} = \frac{स्पअ}{छेअ} = \frac{स्पअ}{\sqrt{१ + स्प^2अ}} ।$$

$$ज्याअ = \frac{ज्याअ \times कोज्याअ}{कोज्याअ} = \frac{कोज्याअ}{\frac{कोज्याअ}{ज्याअ}} = \frac{कोज्याअ}{कोस्प} ।$$

$$ज्याअ = \frac{ज्याअ \times \frac{१}{ज्याअ}}{\frac{१}{ज्याअ}} = \frac{१}{\frac{१}{ज्याअ}} = \frac{१}{कोछेअ}$$

$$= \frac{१}{\sqrt{१ + कोस्प^2अ}} ।$$

$$ज्याअ = \frac{ज्याअ \times कोज्याअ}{कोज्याअ} = \frac{\frac{१}{कोज्याअ} \times कोज्याअ}{\frac{१}{ज्याअ}} = \frac{छेअ \times कोज्याअ}{कोछेअ} ।$$

$$\text{ज्याअ} = \frac{\text{ज्याअ . ज्याअ . कोज्याअ}}{\text{ज्याअ . कोज्याअ}} = \frac{\frac{\text{ज्याअ}}{\text{कोज्याअ}} \times \frac{\text{कोज्याअ}}{\text{ज्याअ}}}{\frac{१}{\text{ज्याअ}}}$$

$$= \frac{\text{स्पअ} \times \text{कोस्पअ}}{\text{कोछेअ}} \text{।}$$

$$\text{ज्याअ} = \frac{\text{स्पअ}}{\text{छेअ}} = \frac{\sqrt{\text{छे}^२\text{अ} - १}}{\text{छेअ}} \text{।}$$

$$(२)\ \text{कोज्याअ} = \frac{\text{ज्याअ} \times \text{कोज्याअ}}{\text{ज्याअ}} = \frac{\text{ज्याअ}}{\frac{\text{ज्याअ}}{\text{कोज्याअ}}} = \frac{\text{ज्याअ}}{\text{स्पअ}} \text{।}$$

$$\text{कोज्याअ} = \frac{\text{कोज्याअ} \times \frac{१}{\text{कोज्याअ}}}{\frac{१}{\text{कोज्याअ}}} = \frac{१}{\text{छेअ}} = \frac{१}{\sqrt{१ + \text{स्प}^२\text{अ}}} \text{।}$$

$$\text{कोज्याअ} = \frac{\text{ज्याअ. कोज्याअ . कोज्याअ}}{\text{ज्याअ} \times \text{कोज्याअ}} = \frac{\frac{\text{ज्याअ}}{\text{कोज्याअ}} \times \frac{\text{कोज्याअ}}{\text{ज्याअ}}}{\frac{१}{\text{कोज्याअ}}}$$

$$= \frac{\text{स्पअ} \times \text{कोस्पअ}}{\text{छेअ}} \text{।}$$

$$\text{कोज्याअ} = \frac{\text{ज्याअ} \times \text{कोज्याअ}}{\text{ज्याअ}} = \frac{\text{ज्याअ} \times \frac{१}{\text{ज्याअ}}}{\frac{१}{\text{कोज्याअ}}}$$

$$= \frac{\text{ज्याअ} \times \text{कोछेअ}}{\text{छेअ}} \text{।}$$

$$\text{कोज्याअ} = \frac{\text{ज्याअ} \times \text{कोज्याअ}}{\text{ज्याअ}} = \text{ज्याअ.कोस्पअ ।}$$

$$\text{कोज्याअ} = \frac{\text{ज्याअ} \times \text{कोज्याअ}}{\text{ज्याअ}} = \frac{\frac{\text{कोज्याअ}}{\text{ज्याअ}}}{\frac{१}{\text{ज्याअ}}} = \frac{\text{कोस्पअ}}{\text{कोछेअ}}$$

$$= \frac{\text{कोस्पअ}}{\sqrt{१+\text{कोस्प}^{२}\text{अ}}} = \frac{\sqrt{\text{कोछे}^{२}\text{अ}-१}}{\text{कोछेअ}} \text{।}$$

(३) $$\text{स्पअ} = \frac{\text{ज्याअ}}{\text{कोज्याअ}} = \frac{\text{ज्याअ}}{\sqrt{१-\text{ज्या}^{२}\text{अ}}} \text{।}$$

$$\text{स्पअ} = \frac{\text{ज्याअ}}{\text{कोज्याअ}} = \frac{\sqrt{१-\text{कोज्या}^{२}\text{अ}}}{\text{कोज्याअ}} \text{।}$$

$$\text{स्पअ} = \frac{\text{ज्याअ}}{\text{कोज्याअ}} = \frac{१}{\frac{\text{कोज्याअ}}{\text{ज्याअ}}} = \frac{१}{\text{कोस्पअ}} \text{।}$$

$$\text{स्पअ} = \frac{१}{\text{कोस्पअ}} = \frac{१}{\sqrt{\text{कोछे}^{२}\text{अ}-१}} \text{।}$$

$$स्प अ = \frac{ज्या अ}{कोज्या अ} = \frac{ज्या अ \cdot ज्या अ}{कोज्या अ \times ज्या अ} = \frac{ज्या अ}{\frac{कोज्या अ}{ज्या अ}} \times \frac{१}{ज्या अ}$$

$$= \frac{ज्या अ \times कोछे अ}{कोस्प अ} ।$$

$$स्प अ = \frac{ज्या अ}{कोज्या अ} = \frac{१}{कोज्या अ \times \frac{१}{ज्या अ}} = \frac{छे अ}{कोछे अ} ।$$

$$स्प अ = \frac{ज्या अ \cdot ज्या अ \, कोज्या अ}{कोज्या अ . ज्या अ . कोज्या अ} = \frac{कोज्या अ}{ज्या अ . \frac{कोज्या अ}{ज्या अ} \times \frac{कोज्या अ}{ज्या अ}}$$

$$= \frac{कोज्या अ}{ज्या अ . कोस्प^{२} अ} ।$$

$$स्प अ = \frac{ज्या अ}{कोज्या अ} = \frac{\sqrt{१ - कोज्या^{२} अ}}{१ - उअ} = \frac{\sqrt{१ - (१ - उअ)^{२}}}{१ - उअ}$$

$$= \frac{\sqrt{२उअ - उ^{२} अ}}{१ - उअ} ।$$

(४) $कोस्प अ = \frac{कोज्या अ}{ज्या अ}$ । इतोऽपि पूर्वोक्तस्पर्शरेखास्वरूपे बहुधा हर-भाज्ययोः परिवर्तनादेव सर्वमुपपद्यते ।

(५) $छे अ = \frac{१}{कोज्या अ} = \sqrt{१ + स्प^{२} अ}$ ।

$$छे अ = \frac{१}{कोज्या अ} = \frac{ज्या अ \times १}{कोज्या अ \times ज्या अ} = \frac{स्प अ}{ज्या अ} ।$$

$$छेअ = \frac{१}{कोज्याअ} = \frac{ज्याअ \times १}{कोज्याअ \times ज्याअ} = \frac{१}{\frac{कोज्याअ}{ज्याअ} \times ज्याअ}$$

$$= \frac{१}{कोस्पअ \times ज्याअ} ।$$

$$छेअ = \frac{१}{कोस्पअ \times ज्याअ} = \frac{\frac{१}{ज्याअ}}{कोस्पअ} = \frac{कोछेअ}{कोस्पअ} ।$$

$$छेअ = \frac{१}{कोज्याअ} = \frac{ज्याअ \times कोज्याअ \times १}{कोज्याअ \times ज्याअ \times कोज्याअ}$$

$$= \frac{स्पअ \times कोस्पअ}{कोज्याअ} ।$$

$$छेअ = \frac{१}{कोज्याअ} = \frac{ज्याअ \times १}{कोज्याअ \times ज्याअ} = \frac{ज्याअ}{कोज्याअ} \times \frac{१}{ज्याअ}$$

$$= \frac{ज्याअ \times कोछेअ}{कोज्याअ} ।$$

$$छेअ = \frac{१}{कोज्याअ} = \frac{१}{\sqrt{१ - ज्या^{२}अ}} ।$$

$$छेअ = \frac{कोछेअ}{कोस्पअ} = \frac{\sqrt{१ + कोस्प^{२}अ}}{कोस्पअ} ।$$

$$छेअ = \frac{कोछेअ}{कोस्पअ} = \frac{कोछेअ}{\sqrt{कोछेअ^{२} - १}} ।$$

$$छेअ = \frac{१}{कोज्याअ} = \frac{ज्याअ \times १}{कोज्याअ \times ज्याअ} = स्पअ \times कोछेअ ।$$

$$छेअ = \frac{१}{कोज्याअ} = \frac{१}{१-उअ} ।$$

(६) $कोछेअ = \frac{१}{ज्याअ} = \sqrt{१+कोस्प^{२}अ}$ ।

$$कोछेअ = \frac{१}{ज्याअ} = \frac{कोज्याअ \times १}{ज्याअ \times कोज्याअ}$$

$$= \frac{\frac{१}{कोज्याअ}}{\frac{ज्याअ}{कोज्याअ}} = \frac{छेअ}{स्पअ} ।$$

$$कोछेअ = \frac{१}{ज्याअ} = \frac{कोज्याअ \times १}{ज्याअ \times कोज्याअ} = \frac{कोस्पअ}{कोज्याअ} ।$$

$$कोछेअ = \frac{१}{ज्याअ} = \frac{कोज्याअ \times १}{ज्याअ \times कोज्याअ} = \frac{१}{\frac{ज्याअ}{कोज्याअ} \times कोज्याअ}$$

$$= \frac{१}{कोज्याअ \times स्पअ} ।$$

$$कोछेअ = \frac{१}{ज्याअ} = \frac{ज्याअ \times कोज्याअ \times १}{ज्याअ \times ज्याअ \times कोज्याअ}$$

$$= \frac{\frac{ज्याअ}{कोज्याअ} \times \frac{कोज्याअ}{ज्याअ}}{ज्याअ} = \frac{स्पअ \times कोस्पअ}{ज्याअ} ।$$

$$\text{कोछेअ} = \frac{१}{\text{ज्याअ}} = \frac{\text{कोज्याअ} \times १}{\text{ज्याअ} \times \text{कोज्याअ}} = \frac{\text{कोज्याअ} \times \text{छेअ}}{\text{ज्याअ}} \text{ ।}$$

$$\text{कोछेअ} = \frac{१}{\text{ज्याअ}} = \frac{१}{\sqrt{१ - \text{कोज्या}^२\text{अ}}} \text{ ।}$$

$$\text{कोछेअ} = \frac{\text{छेअ}}{\text{स्पअ}} = \frac{\sqrt{१ + \text{स्प}^२\text{अ}}}{\text{स्पअ}} \text{ ।}$$

$$\text{कोछेअ} = \frac{\text{छेअ}}{\text{स्पअ}} = \frac{\text{छेअ}}{\sqrt{\text{छे}^२\text{अ} - १}} \text{ ।}$$

$$\text{कोछेअ} = \frac{१}{\text{ज्याअ}} = \frac{\text{कोज्याअ} \times १}{\text{ज्याअ} \times \text{कोज्याअ}} = \text{कोस्पअ} \times \text{छेअ} \text{ ।}$$

$$\text{कोछेअ} = \frac{१}{\text{ज्याअ}} = \frac{१}{\sqrt{१ - \text{कोज्या}^२\text{अ}}} = \frac{१}{\sqrt{१ - (१ - \text{उअ})^२}}$$

$$= \frac{१}{\sqrt{२\text{उअ} - \text{उ}^२\text{अ}}} \text{ ।}$$

(७) $\text{उअ} = १ - \text{कोज्याअ}$ ।

$$\text{उअ} = १ - \text{कोज्याअ} = १ - \sqrt{१ - \text{ज्या}^२\text{अ}} \text{ ।}$$

$$\text{उअ} = १ - \text{कोज्याअ} = १ - \frac{१}{\frac{१}{\text{कोज्याअ}}} = १ - \frac{१}{\text{छेअ}}$$

$$= १ - \frac{१}{\sqrt{१ + \text{स्प}^२\text{अ}}} \text{ ।}$$

$$\text{छअ} = १ - \text{कोज्याअ} = १ - \frac{\text{ज्याअ} \times \text{कोज्याअ}}{\text{ज्याअ}}$$

$$= १ - \frac{१}{\frac{१}{\text{ज्याअ}}} \times \frac{\text{कोज्याअ}}{\text{ज्याअ}}$$

$$= १ - \frac{१ \times \text{कोस्पअ}}{\text{कोछेअ}} = १ - \frac{\text{कोस्पअ}}{\text{कोछेअ}}$$

$$= १ - \frac{\text{कोस्पअ}}{\sqrt{१ + \text{कोस्प}^२\text{अ}}} ।$$

$$\text{छअ} = १ - \frac{\text{कोस्पअ}}{\text{कोछेअ}} = १ - \frac{\sqrt{\text{कोछे}^२\text{अ} - १}}{\text{कोछेअ}} ।$$

---

अथ

(३०) मक्रमोक्तद्विगुणकोणस्य ज्यादिस्वरूपाणां वैशद्यम् ।

$$(१)\ \text{ज्या}२\text{अ} = २\text{ज्याअ} . \text{कोज्याअ} = \frac{२\text{ज्याअ} . \text{ज्याअ} . \text{कोज्याअ}}{\text{ज्याअ}}$$

$$= \frac{२\text{ज्या}^२\text{अ}}{\frac{\text{ज्याअ}}{\text{कोज्याअ}}} = \frac{२\text{ज्या}^२\text{अ}}{\text{स्पअ}} ।$$

$$\text{ज्या}२\text{अ} = २\text{ज्याअ} \cdot \text{कोज्याअ} = \frac{२\text{ज्याअ}.\text{कोज्याअ}.\text{कोज्याअ}}{\text{कोज्याअ}}$$

$$= \frac{\frac{२\text{कोज्या}^२\text{अ}}{\text{कोज्याअ}}}{\text{ज्याअ}} = \frac{२\text{कोज्या}^२\text{अ}}{\text{कोस्पअ}} ।$$

$$\text{ज्या}२\text{अ} = २\text{ज्याअ}.\text{कोज्याअ} = \frac{\frac{२\text{ज्याअ}}{१}}{\text{कोज्याअ}} = \frac{२\text{ज्याअ}}{\text{छेअ}} ।$$

$$\text{ज्या}२\text{अ} = २\text{ज्याअ}.\text{कोज्याअ} = \frac{\frac{२\text{कोज्याअ}}{१}}{\text{ज्याअ}} = \frac{२\text{कोज्याअ}}{\text{कोछेअ}} ।$$

$$\text{ज्या}२\text{अ} = २\text{ज्याअ}.\text{कोज्याअ} = \frac{२\text{ज्याअ}.\text{कोज्याअ}.\text{कोज्याअ}}{\text{कोज्याअ}}$$

$$= \frac{२\text{ज्याअ}}{\text{कोज्याअ} \times \frac{१}{\text{कोज्या}^२\text{अ}}} = \frac{२\text{स्पअ}}{\text{छे}^२\text{अ}} ।$$

$$\text{ज्या}२\text{अ} = \frac{२\text{स्पअ}}{\text{छे}^२\text{अ}} = \frac{२\text{स्पअ}}{\sqrt{१+\text{स्प}^२\text{अ}}} ।$$

$$\text{ज्या}२\text{अ} = २\text{ज्याअ}.\text{कोज्याअ} = \frac{२}{\frac{१}{\text{ज्याअ कोज्याअ}}}$$

$$=\frac{२}{\frac{ज्या^२अ}{ज्याअ.कोज्याअ}+\frac{कोज्या^२अ}{ज्याअ.कोज्याअ}}$$

$$=\frac{२}{\frac{ज्याअ}{कोज्याअ}+\frac{कोज्याअ}{ज्याअ}}=\frac{२}{स्पअ+कोस्पअ}।$$

$$ज्या२अ=२ज्याअ.कोज्याअ=\frac{२ज्याअ.ज्याअ.कोज्याअ}{ज्याअ}$$

$$=\frac{२कोज्याअ}{ज्याअ\times\frac{१}{ज्या^२अ}}=\frac{२कोस्पअ}{कोछे^२अ}।$$

$$ज्या२अ=\frac{२कोस्पअ}{कोछे^२अ}=\frac{२कोस्पअ}{१+कोस्प^२अ}।$$

(२) $कोज्या२अ=कोज्या^२अ-ज्या^२अ=१-ज्या^२अ-ज्या^२अ$
$=१-२ज्या^२अ।$

$कोज्या२अ=कोज्या^२अ-ज्या^२अ=कोज्या^२अ-(१-कोज्या^२अ)$
$=कोज्या^२अ-१+कोज्या^२अ=२कोज्या^२अ-१।$

$$कोज्या२अ=कोज्या^२अ-ज्या^२अ=\frac{१-\frac{ज्या^२अ}{कोज्या^२अ}}{\frac{१}{कोज्या^२अ}}$$

$$=\frac{१-स्प^२अ}{छे^२अ}=\frac{१-स्प^२अ}{१+स्प^२अ}।$$

$$\text{कोज्या२अ} = \text{कोज्या}^{२}\text{अ} - \text{ज्या}^{२}\text{अ} = \frac{\dfrac{\text{कोज्या}^{२}\text{अ} - \text{ज्या}^{२}\text{अ}}{\text{कोज्याअ.ज्याअ}}}{\dfrac{१}{\text{कोज्याअ.ज्याअ}}}$$

$$= \frac{\dfrac{\text{कोज्याअ}}{\text{ज्याअ}} - \dfrac{\text{ज्याअ}}{\text{कोज्याअ}}}{\dfrac{\text{कोज्या}^{२}\text{अ} + \text{ज्या}^{२}\text{अ}}{\text{कोज्याअ. ज्याअ}}} = \frac{\text{कोस्पअ} - \text{स्पअ}}{\dfrac{\text{कोज्याअ}}{\text{ज्याअ}} + \dfrac{\text{ज्याअ}}{\text{कोज्याअ}}}$$

$$= \frac{\text{कोस्पअ} - \text{स्पअ}}{\text{कोस्पअ} + \text{स्पअ}} \text{ ।}$$

$$\text{कोज्या२अ} = \text{कोज्या}^{२}\text{अ} - \text{ज्या}^{२}\text{अ} = \frac{\dfrac{\text{कोज्या}^{२}\text{अ}}{\text{ज्या}^{२}\text{अ}} - १}{\dfrac{१}{\text{ज्या}^{२}\text{अ}}}$$

$$= \frac{\text{कोस्प}^{२}\text{अ} - १}{\dfrac{\text{कोज्या}^{२}\text{अ}+\text{ज्या}^{२}\text{अ}}{\text{ज्या}^{२}\text{अ}}} = \frac{\text{कोस्प}^{२}\text{अ}-१}{\text{कोस्प}^{२}\text{अ}+१} \text{ ।}$$

$$\text{कोज्या२अ} = \text{कोज्या}^{२}\text{अ} - \text{ज्या}^{२}\text{अ} = २\text{कोज्या}^{२}\text{अ} - १$$

$$= \frac{\dfrac{२\text{कोज्या}^{२}\text{अ}-१}{\text{कोज्या}^{२}\text{अ}}}{\dfrac{१}{\text{कोज्या}^{२}\text{अ}}} = \frac{२ - \dfrac{१}{\text{कोज्या}^{२}\text{अ}}}{\dfrac{१}{\text{कोज्या}^{२}\text{अ}}} = \frac{२ - \text{छे}^{२}\text{अ}}{\text{छे}^{२}\text{अ}} \text{ ।}$$

$$\text{कोज्या२अ} = २\text{कोज्या}^{२}\text{अ} - १ = \frac{\dfrac{२\text{कोज्या}^{२}\text{अ} - १}{\text{कोज्याअ}}}{\dfrac{१}{\text{कोज्याअ}}}$$

$$= \frac{२कोज्याअ - \frac{१}{कोज्याअ}}{\frac{१}{कोज्याअ}} = \frac{२कोज्याअ - छेअ}{छेअ} ।$$

$$कोज्या२अ = कोज्या^{२}अ - ज्या^{२}अ = १ - २ज्या^{२}अ = \frac{\frac{१-२ज्या^{२}अ}{ज्या^{२}अ}}{\frac{१}{ज्या^{२}अ}}$$

$$= \frac{कोछे^{२}अ - २}{कोछे^{२}अ} ।$$

$$कोज्या२अ = २कोज्या^{२}अ - १ = \frac{\frac{२कोज्या^{२}अ - १}{कोज्याअ}}{\frac{१}{कोज्याअ}}$$

$$= \frac{२कोज्याअ - \frac{१}{कोज्याअ}}{\frac{१}{कोज्याअ}} = \frac{२कोज्याअ - छेअ}{छेअ} ।$$

$$कोज्या२अ = १ - २ज्या^{२}अ = \frac{\frac{१-२ज्या^{२}अ}{ज्या^{२}अ}}{\frac{१}{ज्या^{२}अ}} = \frac{\frac{१}{ज्या^{२}अ} - २}{\frac{१}{ज्या^{२}अ}}$$

$$= \frac{कोछे^{२}अ - २}{कोछे^{२}अ} ।$$

$$\text{कोज्या}२\text{अ} = १ - २\text{ज्या}^२\text{अ} = \frac{\dfrac{१-२\text{ज्या}^२\text{अ}}{\text{ज्याअ}}}{\dfrac{१}{\text{ज्याअ}}}$$

$$= \frac{\text{कोछेअ} - २\text{ज्याअ}}{\text{कोछेअ}} \text{ ।}$$

(३) $$\text{स्प}२\text{अ} = \frac{\text{ज्या}२\text{अ}}{\text{कोज्या}२\text{अ}} = \frac{२\text{ज्याअ} . \text{कोज्याअ}}{\text{कोज्या}^२\text{अ} - \text{ज्या}^२\text{अ}}$$

$$= \frac{\dfrac{२\text{ज्याअ} . \text{कोज्याअ}}{\text{कोज्या}^२\text{अ}}}{\dfrac{\text{कोज्या}^२\text{अ} - \text{ज्या}^२\text{अ}}{\text{कोज्या}^२\text{अ}}} = \frac{\dfrac{२\text{ज्याअ}}{\text{कोज्याअ}}}{१ - \dfrac{\text{ज्या}^२\text{अ}}{\text{कोज्या}^२\text{अ}}}$$

$$= \frac{२\text{स्पअ}}{१ - \text{स्प}^२\text{अ}} \text{ ।}$$

$$\text{स्प}२\text{अ} = \frac{२\text{ज्याअ} . \text{कोज्याअ}}{\text{कोज्या}^२\text{अ} - \text{ज्या}^२\text{अ}} = \frac{२}{\dfrac{\text{कोज्या}^२\text{अ} - \text{ज्या}^२\text{अ}}{\text{ज्याअ} . \text{कोज्याअ}}}$$

$$= \frac{२}{\dfrac{\text{कोज्याअ}}{\text{ज्याअ}} - \dfrac{\text{ज्याअ}}{\text{कोज्याअ}}} = \frac{२}{\text{कोस्पअ} - \text{स्पअ}} \text{ ।}$$

$$\text{स्प}२\text{अ} = \frac{२\text{ज्याअ} . \text{कोज्याअ}}{\text{कोज्या}^२\text{अ} - \text{ज्या}^२\text{अ}} = \frac{२\text{ज्याअ} . \text{कोज्याअ}}{१ - २\text{ज्या}^२\text{अ}} \text{ ।}$$

$$=\frac{२कोज्याअ-\frac{१}{कोज्याअ}}{\frac{१}{कोज्याअ}}=\frac{२कोज्याअ-छेअ}{छेअ}।$$

$$कोज्या२अ=कोज्या^{२}अ-ज्या^{२}अ=१-२ज्या^{२}अ=\frac{\frac{१-२ज्या^{२}अ}{ज्या^{२}अ}}{\frac{१}{ज्या^{२}अ}}$$

$$=\frac{कोछे^{२}अ-२}{कोछे^{२}अ}।$$

$$कोज्या२अ=२कोज्या^{२}अ-१=\frac{\frac{२कोज्या^{२}अ-१}{कोज्याअ}}{\frac{१}{कोज्याअ}}$$

$$=\frac{२कोज्याअ-\frac{१}{कोज्याअ}}{\frac{१}{कोज्याअ}}=\frac{२कोज्याअ-छेअ}{छेअ}।$$

$$कोज्या२अ=१-२ज्या^{२}अ=\frac{\frac{१-२ज्या^{२}अ}{ज्या^{२}अ}}{\frac{१}{ज्या^{२}अ}}=\frac{\frac{१}{ज्या^{२}अ}-२}{\frac{१}{ज्या^{२}अ}}$$

$$=\frac{कोछे^{२}अ-२}{कोछे^{२}अ}।$$

$$\text{कोज्या}२\text{अ} = १ - २\text{ज्या}^२\text{अ} = \frac{\frac{१ - २\text{ज्या}^२\text{अ}}{\text{ज्याअ}}}{\frac{१}{\text{ज्याअ}}}$$

$$= \frac{\text{कोछेअ} - २\text{ज्याअ}}{\text{कोछेअ}} \text{ ।}$$

$$(३)\ \text{स्प}२\text{अ} = \frac{\text{ज्या}२\text{अ}}{\text{कोज्या}२\text{अ}} = \frac{२\text{ज्याअ}\,.\,\text{कोज्याअ}}{\text{कोज्या}^२\text{अ} - \text{ज्या}^२\text{अ}}$$

$$= \frac{\frac{२\text{ज्याअ}\,.\,\text{कोज्याअ}}{\text{कोज्या}^२\text{अ}}}{\frac{\text{कोज्या}^२\text{अ} - \text{ज्या}^२\text{अ}}{\text{कोज्या}^२\text{अ}}} = \frac{\frac{२\text{ज्याअ}}{\text{कोज्याअ}}}{१ - \frac{\text{ज्या}^२\text{अ}}{\text{कोज्या}^२\text{अ}}}$$

$$= \frac{२\text{स्पअ}}{१ - \text{स्प}^२\text{अ}} \text{ ।}$$

$$\text{स्प}२\text{अ} = \frac{२\text{ज्याअ}\,.\,\text{कोज्याअ}}{\text{कोज्या}^२\text{अ} - \text{ज्या}^२\text{अ}} = \frac{२}{\frac{\text{कोज्या}^२\text{अ} - \text{ज्या}^२\text{अ}}{\text{ज्याअ}\,.\,\text{कोज्याअ}}}$$

$$= \frac{२}{\frac{\text{कोज्याअ}}{\text{ज्याअ}} - \frac{\text{ज्याअ}}{\text{कोज्याअ}}} = \frac{२}{\text{कोस्पअ} - \text{स्पअ}} \text{ ।}$$

$$\text{स्प}२\text{अ} = \frac{२\text{ज्याअ}\,.\,\text{कोज्याअ}}{\text{कोज्या}^२\text{अ} - \text{ज्या}^२\text{अ}} = \frac{२\text{ज्याअ}\,.\,\text{कोज्याअ}}{१ - २\text{ज्या}^२\text{अ}} \text{ ।}$$

$$\text{स्प}२\text{अ} = \frac{२\text{ज्या}\text{अ} \cdot \text{कोज्या}\text{अ}}{\text{कोज्या}^२\text{अ} - \text{ज्या}^२\text{अ}} = \frac{२\text{ज्या}\text{अ} \cdot \text{कोज्या}\text{अ}}{२\text{कोज्या}^२\text{अ} - १}।$$

$$\text{स्प}२\text{अ} = \frac{\dfrac{२\text{ज्या}\text{अ} \cdot \text{कोज्या}\text{अ}}{\text{ज्या}^२\text{अ}}}{\dfrac{\text{कोज्या}^२\text{अ} - \text{ज्या}^२\text{अ}}{\text{ज्या}^२\text{अ}}} = \frac{\dfrac{२\text{कोज्या}\text{अ}}{\text{ज्या}\text{अ}}}{\dfrac{\text{कोज्या}^२\text{अ}}{\text{ज्या}^२\text{अ}} - १}$$

$$= \frac{२\text{कोस्प}\text{अ}}{\text{कोस्प}^२\text{अ} - १}।$$

$$\text{स्प}२\text{अ} = \frac{२\text{ज्या}\text{अ} \cdot \text{कोज्या}\text{अ}}{\text{कोज्या}^२\text{अ} - \text{ज्या}^२\text{अ}} = \frac{२\text{ज्या}\text{अ} \cdot \text{कोज्या}\text{अ}}{२\text{कोज्या}^२\text{अ} - १}$$

$$= \frac{\dfrac{२\text{ज्या}\text{अ} \cdot \text{कोज्या}\text{अ}}{\text{कोज्या}^२\text{अ}}}{\dfrac{२\text{कोज्या}^२\text{अ} - १}{\text{कोज्या}^२\text{अ}}} = \frac{\dfrac{२\text{ज्या}\text{अ}}{\text{कोज्या}\text{अ}}}{२ - \dfrac{१}{\text{कोज्या}^२\text{अ}}} = \frac{२\text{स्प}\text{अ}}{२ - \text{छे}^२\text{अ}}।$$

$$\text{स्प}२\text{अ} = \frac{२\text{ज्या}\text{अ} \cdot \text{कोज्या}\text{अ}}{\text{कोज्या}^२\text{अ} - \text{ज्या}^२\text{अ}} = \frac{२\text{ज्या}\text{अ} \cdot \text{कोज्या}\text{अ}}{१ - २\text{ज्या}^२\text{अ}}$$

$$= \frac{\dfrac{२\text{ज्या}\text{अ} \cdot \text{कोज्या}\text{अ}}{\text{ज्या}^२\text{अ}}}{\dfrac{१ - २\text{ज्या}^२\text{अ}}{\text{ज्या}^२\text{अ}}} = \frac{\dfrac{२\text{कोज्या}\text{अ}}{\text{ज्या}\text{अ}}}{\dfrac{१}{\text{ज्या}^२\text{अ}} - २}$$

$$= \frac{२\text{कोस्प}\text{अ}}{\text{कोछे}^२\text{अ} - २}।$$

(४) $\text{कोस्प}२\text{अ} = \dfrac{\text{कोज्या}२\text{अ}}{\text{ज्या}२\text{अ}} = \dfrac{\text{कोज्या}^{२}\text{अ} - \text{ज्या}^{२}\text{अ}}{२\text{कोज्याअ} \cdot \text{ज्याअ}}$ ।

एवं स्पष्टमवगम्यते यत् स्पर्शरेखाया हरभाज्ययोः परिवर्त्तनात् कोटिस्पर्शरेखा भवत्यतः पूर्वकृतस्पर्शरेखास्वरूपाणां हरभाज्ययोः परिवर्त्तनादेव सर्वेषां कोटिस्पर्शरेखास्वरूपाणां सिद्धिः सुखेन संपाद्या।

(५) $\text{छे}२\text{अ} = \dfrac{१}{\text{कोज्या}२\text{अ}} = \dfrac{१}{\text{कोज्या}^{२}\text{अ} - \text{ज्या}^{२}\text{अ}} = \dfrac{१}{२\text{कोज्या}^{२}\text{अ} - १}$

$$= \dfrac{\dfrac{१}{\text{कोज्या}^{२}\text{अ}}}{\dfrac{२\text{कोज्या}^{२}\text{अ} - १}{\text{कोज्या}^{२}\text{अ}}} = \dfrac{\text{छे}^{२}\text{अ}}{२ - \dfrac{१}{\text{कोज्या}^{२}\text{अ}}} = \dfrac{\text{छे}^{२}\text{अ}}{२ - \text{छे}^{२}\text{अ}} \text{ ।}$$

$$\text{छे}२\text{अ} = \dfrac{१}{२\text{कोज्या}^{२}\text{अ} - १} = \dfrac{\dfrac{१}{\text{कोज्याअ}}}{\dfrac{२\text{कोज्या}^{२}\text{अ} - १}{\text{कोज्याअ}}}$$

$$= \dfrac{\text{छेअ}}{२\text{कोज्याअ} - \dfrac{१}{\text{कोज्याअ}}} = \dfrac{\text{छेअ}}{२\text{कोज्याअ} - \text{छेअ}} \text{ ।}$$

$\text{छे}२\text{अ} = \dfrac{१}{२\text{कोज्या}^{२}\text{अ} - १} = \dfrac{१}{१ - २\text{ज्या}^{२}\text{अ}}$, एते तु पूर्वकृतवैशद्यादतिविशदे।

$$\text{छे}२\text{अ} = \dfrac{१}{\text{कोज्या}^{२}\text{अ} - \text{ज्या}^{२}\text{अ}} = \dfrac{\text{ज्या}^{२}\text{अ} + \text{ज्या}^{२}\text{अ}}{\text{कोज्या}^{२}\text{अ} - \text{ज्या}^{२}\text{अ}}$$

$$= \frac{\dfrac{\text{कोज्या}^2\text{अ} + \text{ज्या}^2\text{अ}}{\text{कोज्या}^2\text{अ}}}{\dfrac{\text{कोज्या}^2\text{अ} - \text{ज्या}^2\text{अ}}{\text{कोज्या}^2\text{अ}}} = \frac{१ + \dfrac{\text{ज्या}^2\text{अ}}{\text{कोज्या}^2\text{अ}}}{१ - \dfrac{\text{ज्या}^2\text{अ}}{\text{कोज्या}^2\text{अ}}}$$

$$= \frac{१ + \text{स्प}^2\text{अ}}{१ - \text{स्प}^2\text{अ}} ।$$

$$\text{छे}२\text{अ} = \frac{१}{\text{कोज्या}^2\text{अ} - \text{ज्या}^2\text{अ}} = \frac{\text{कोज्या}^2\text{अ} + \text{ज्या}^2\text{अ}}{\text{कोज्या}^2\text{अ} - \text{ज्या}^2\text{अ}}$$

$$= \frac{\dfrac{\text{कोज्या}^2\text{अ} + \text{ज्या}^2\text{अ}}{\text{कोज्याअ} . \text{ज्याअ}}}{\dfrac{\text{कोज्या}^2\text{अ} - \text{ज्या}^2\text{अ}}{\text{कोज्याअ} . \text{ज्याअ}}} = \frac{\dfrac{\text{कोज्याअ}}{\text{ज्याअ}} + \dfrac{\text{ज्याअ}}{\text{कोज्याअ}}}{\dfrac{\text{कोज्याअ}}{\text{ज्याअ}} - \dfrac{\text{ज्याअ}}{\text{कोज्याअ}}}$$

$$= \frac{\text{कोस्पअ} + \text{स्पअ}}{\text{कोस्पअ} - \text{स्पअ}} ।$$

$$\text{छे}२\text{अ} = \frac{१}{\text{कोज्या}^2\text{अ} - \text{ज्या}^2\text{अ}} = \frac{\text{कोज्या}^2\text{अ} + \text{ज्या}^2\text{अ}}{\text{कोज्या}^2\text{अ} - \text{ज्या}^2\text{अ}}$$

$$= \frac{\dfrac{\text{कोज्या}^2\text{अ} + \text{ज्या}^2\text{अ}}{\text{ज्या}^2\text{अ}}}{\dfrac{\text{कोज्या}^2\text{अ} - \text{ज्या}^2\text{अ}}{\text{ज्या}^2\text{अ}}} = \frac{\dfrac{\text{कोज्या}^2\text{अ}}{\text{ज्या}^2\text{अ}} + १}{\dfrac{\text{कोज्या}^2\text{अ}}{\text{ज्या}^2\text{अ}} - १}$$

$$= \frac{\text{कोस्प}^2\text{अ} + १}{\text{कोस्प}^2\text{अ} - १} ।$$

$$छे२अ = \frac{१}{कोज्या^२अ - ज्या^२अ} = \frac{१}{१ - २ज्या^२अ}$$

$$= \frac{\frac{१}{ज्या^२अ}}{\frac{१ - २ज्या^२अ}{ज्या^२अ}} = \frac{कोछे^२अ}{\frac{१}{ज्या^२अ} - २} = \frac{कोछे^२अ}{कोछे^२अ - २} ।$$

(६) $$कोछे२अ = \frac{१}{ज्या२अ} = \frac{१}{२ज्याअ \times कोज्याअ}$$

$$= \frac{१}{२} \frac{१ \times १}{ज्याअ \,.\, कोज्याअ} = \frac{१}{२} छेअ \times कोछेअ ।$$

$$कोछे२अ = \frac{१}{ज्या२अ} = \frac{१}{२ज्याअ \times कोज्याअ} = \frac{छेअ}{२ज्याअ} ।$$

$$कोछे२अ = \frac{१}{२ज्याअ \,.\, कोज्याअ} = \frac{कोछेअ}{२कोज्याअ} ।$$

$$कोछे२अ = \frac{१}{ज्या^२अ} = \frac{१}{२ज्याअ \,.\, कोज्याअ}$$

$$= \frac{१}{\frac{२ज्याअ}{कोज्याअ} \times कोज्या^२अ} = \frac{१}{२स्पअ \times कोज्या^२अ}$$

$$= \frac{छे^२अ}{२स्पअ} = \frac{१ + स्प^२अ}{२स्पअ} ।$$

$$\text{कोछे२अ} = \frac{\text{१}}{\text{२ज्याअ . कोज्याअ}} = \frac{\text{१} \times \text{१}}{\text{१} \times \text{२ज्याअ.कोज्याअ}}$$

$$= \frac{\text{१}}{\text{२ज्याअ . कोज्याअ}} = \frac{\text{ज्या}^{\text{२}}\text{अ} + \text{कोज्या}^{\text{२}}\text{अ}}{\text{२कोज्याअ . ज्याअ}}$$

$$= \frac{\dfrac{\text{ज्याअ}}{\text{कोज्याअ}} + \dfrac{\text{कोज्याअ}}{\text{ज्याअ}}}{\text{२}} = \frac{\text{स्पअ} + \text{कोस्पअ}}{\text{२}} \text{ ।}$$

$$\text{कोछे२अ} = \frac{\text{१}}{\text{२ज्याअ . कोज्याअ}} = \frac{\text{१}}{\text{२ज्या}^{\text{२}}\text{अ} \cdot \dfrac{\text{कोज्याअ}}{\text{ज्याअ}}}$$

$$= \frac{\dfrac{\text{१}}{\text{ज्या}^{\text{२}}\text{अ}}}{\text{२}\dfrac{\text{कोज्याअ}}{\text{ज्याअ}}} = \frac{\text{कोछे}^{\text{२}}\text{अ}}{\text{२कोस्पअ}} = \frac{\text{१} + \text{कोस्प}^{\text{२}}\text{अ}}{\text{२कोस्पअ}} \text{ ।}$$

(७) $\text{उ२अ} = \text{१} - \text{कोज्या२अ} = \text{१} - (\text{कोज्या}^{\text{२}}\text{अ} - \text{ज्या}^{\text{२}}\text{अ})$

$= \text{१} - \text{कोज्या}^{\text{२}}\text{अ} + \text{ज्या}^{\text{२}}\text{अ} = \text{२ज्या}^{\text{२}}\text{अ}$ ।

$\text{उ२अ} = \text{१} - \text{कोज्या}^{\text{२}}\text{अ} + \text{ज्या}^{\text{२}}\text{अ}$

$= \text{१} - \text{कोज्या}^{\text{२}}\text{अ} + \text{१} - \text{कोज्या}^{\text{२}}\text{अ}$

$= \text{२} - \text{२ कोज्या}^{\text{२}}\text{अ}$ ।

$$\text{उ२अ} = \text{२ज्या}^{\text{२}}\text{अ} = \frac{\dfrac{\text{२ज्या}^{\text{२}}\text{अ}}{\text{कोज्या}^{\text{२}}\text{अ}}}{\dfrac{\text{१}}{\text{कोज्या}^{\text{२}}\text{अ}}} = \frac{\text{२स्प}^{\text{२}}\text{अ}}{\text{छे}^{\text{२}}\text{अ}} = \frac{\text{२स्प}^{\text{२}}\text{अ}}{\text{१} + \text{स्प}^{\text{२}}\text{अ}} \text{ ।}$$

$$\text{ढ२अ} = \text{२ज्या}^{२}\text{अ} = \frac{\dfrac{\text{२ज्या}^{२}\text{अ}}{\text{ज्याअ . कोज्याअ}}}{\dfrac{१}{\text{ज्याअ . कोज्याअ}}} = \frac{\dfrac{\text{२ज्याअ}}{\text{कोज्याअ}}}{\dfrac{१\times१}{१\times\text{ज्याअ.कोज्याअ}}}$$

$$= \frac{\text{२स्पअ}}{\dfrac{१}{\text{ज्याअ . कोज्याअ}}} = \frac{\text{२स्पअ}}{\dfrac{\text{ज्या}^{२}\text{अ}}{\text{ज्याअ.कोज्याअ}} + \dfrac{\text{कोज्या}^{२}\text{अ}}{\text{ज्याअ.कोज्याअ}}}$$

$$= \frac{\text{२स्पअ}}{\dfrac{\text{ज्याअ}}{\text{कोज्याअ}} + \dfrac{\text{कोज्याअ}}{\text{ज्याअ}}} = \frac{\text{२स्पअ}}{\text{स्पअ} + \text{कोस्पअ}} \text{ ।}$$

$$\text{च२अ} = \text{२ज्या}^{२}\text{अ} = \frac{२}{\dfrac{१}{\text{ज्या}^{२}\text{अ}}} = \frac{२}{\text{कोछे}^{२}\text{अ}} = \frac{२}{१ + \text{कोस्प}^{२}\text{अ}} \text{ ।}$$

$$\text{उ२अ} = \text{२ज्या}^{२}\text{अ} = \frac{\text{२ज्याअ}}{\dfrac{१}{\text{ज्याअ}}} = \frac{\text{२ज्याअ}}{\text{कोछेअ}} \text{ ।}$$

$$\text{ह२अ} = \text{२ज्या}^{२}\text{अ} = \frac{\dfrac{\text{२ज्या}^{२}\text{अ}}{\text{कोज्या}^{२}\text{अ}}}{\dfrac{१}{\text{कोज्या}^{२}\text{अ}}} = \frac{\text{२स्प}^{२}\text{अ}}{\text{छे}^{२}\text{अ}} = २\frac{\text{स्प}^{२}\text{अ}}{\text{छे}^{२}\text{अ}}$$

$$= २\frac{\text{छे}^{२}\text{अ} - १}{\text{छे}^{२}\text{अ}} \text{ ।}$$

$$\text{चरेअ} = \text{२ज्या}^2\text{अ} = \frac{\dfrac{\text{२ज्या}^2\text{अ}}{\text{कोज्याअ}}}{\dfrac{1}{\text{कोज्याअ}}} = 2\frac{\dfrac{\text{ज्या}^2\text{अ}}{\text{कोज्याअ}}}{\dfrac{1}{\text{कोज्याअ}}}$$

$$= 2\frac{\dfrac{1 - \text{कोज्या}^2\text{अ}}{\text{कोज्याअ}}}{\dfrac{1}{\text{कोज्याअ}}} = 2\frac{\dfrac{1}{\text{कोज्याअ}} - \text{कोज्याअ}}{\dfrac{1}{\text{कोज्याअ}}}$$

$$= 2\frac{\text{छेअ} - \text{कोज्याअ}}{\text{छेअ}} \text{।}$$

अथ

३९पृष्ठस्थ—३२भक्रमोक्तसारण्युत्पादनप्रकारश्चात्रैवान्ते ३३भक्रमस्यापि निवेशः ।

(१) तत्रादावेकस्याः कलाया ज्याकोटिज्यानयनम् ।

$ज्याअ = \frac{१}{२}\left\{\sqrt{१ + ज्या२अ} - \sqrt{१ - ज्या२अ}\right\}$ । अत्र यदि

$२अ = १५^{\circ}$ अत एव $ज्या२अ = \frac{\sqrt{३} - १}{२\sqrt{२}}$ =* ·२५८८१९०४५१०२, इत्यादि ।

तथा $ज्या\,\frac{१५^{\circ}}{२}$ =† ·१३०५२६१९२२२० इत्यादि = $ज_१$ ।

पुनर्यदि $ज_१$ अनेन २अ इदमुत्थाप्येत तदा

---

* अथावर्गाङ्कानां नवीनगणितरीत्या मूलानयनम् ।

यथा $\sqrt{२}$ = १ + शेषावयवाः । अत्रावयवा 'दशमलव'-स्य नियमानुसारेण २४) १०० (४

```
            ९६
    २८१)  ४०० (१
          २८१
   २८२४)  ११९०० (४
          ११२९६
   ........................
```

एवम् $\sqrt{२}$ = १·४१४......... इत्यादि ।

एवम् $\sqrt{३}$ = १·७३२......... इत्यादि ।

अतः $ज्या\,१५ = \frac{\sqrt{३} - १}{२\sqrt{२}}$ = ·२५८८......... इत्यादि ।

† 'क्रमोत्क्रमज्याकृतियोगमूलात्' 'त्रिज्योत्क्रमज्यानिहतेर्दलस्य मूलं' चाऽर्धांशज्येत्यतः ।

## अभ्यासार्थमुदाहरणानि ।

(१)* यस्यायतक्षेत्रस्य कोटिः ५० ( अ ) हस्ताः । तस्य कोट्येकप्रान्ते स्थित्वा संमुखकोटिप्रान्तयोरन्तर्गतकोणे विद्धे लब्धा अंशाः ३०° ( आ ) तथा च तस्य भुजप्रमाणं कियदिति प्रश्नः ।

$$\text{भुजः} = \frac{\text{अ}}{\text{स्पआ}} = ५०\sqrt{३} = ८६\cdot६०२५४ \text{ हस्ता इत्युत्तरम् ।}$$

(२) पूर्वापरायताया भित्तेर्दक्सूत्राद्दुच्छ्रितिः १५ ( अ ) हस्ताः । तस्या भित्तेर्दक्षिणपार्श्वे ३५ ( क ) हस्तान्तरे देशे स्थित्वा ध्रुवतारायां विलोकितायां सा भित्त्यूर्ध्वप्रान्तलग्ना दृष्टा तत्र तदानीं ध्रुवोन्नतिः कियती स्यादिति प्रश्नः ।

$$\text{ध्रुवोन्नतिः} = {}^{\dagger}\text{स्प}^{-१}\frac{\text{अ}}{\text{क}} = २३^\circ ।\ ११' ।\ ५५'' \text{ इत्युत्तरम् ।}$$

(३) कस्यचिद्वंशादेरौच्च्यावगमाय गणकस्तत्समभुवि सरलप्रदेशं २०० ( अ ) हस्तमितं गणयित्वा तत्प्रदेशैकप्रान्तात् तदपरप्रान्तस्य वंशाग्रस्य चान्तर्गतकोणम् ५०° । १२' ( आ ) अंशमितं विध्वा तत्प्रदेशापरप्रान्ताच्च तदाद्यप्रान्तस्य वंशाग्रस्य चान्तर्गतकोणम् ४०° । २५' ( का ) अंशमितं वंशाद्यग्रस्य चोन्नतिम् ५७° । ४०' ( गा ) अंशमितां ज्ञातवान् । तथा च तस्य वंशादेरौच्च्यं कियत् स्यादिति प्रश्नः ।

---

* सर्वेषां प्रश्नानां सोपपत्तिकान्युत्तराणि प्रश्नान्ते विलोक्यानि ।

† यावतः कोणस्य चापस्य वा स्पर्शरेखा $\frac{\text{अ}}{\text{क}}$ स्यात् तावतो द्योतकं स्प $- १\ \frac{\text{अ}}{\text{क}}$ एतत् स्यात् । एवं ज्या $- १\ \frac{\text{अ}}{\text{क}}$ । कोज्या $- १\ \frac{\text{अ}}{\text{क}}$ इत्यादीनि कोज्यादीनां कोणांश्चापान् वा द्योतयन्तीति ।

$$\text{वंशाग्रौच्च्यम्}\frac{\text{अ·ज्याआ·ज्याका}}{\text{ज्या(आ+का)}} = १२९\text{·}८४ \text{ हस्ताः ।}$$

(४) पारेदुस्तरनदि किञ्चिद्गृहादि वर्त्तते तस्यावाक्तीराद्दूरत्वावगमायावारतीरे १०० (अ) हस्तमितं तिर्यक्प्रदेशं विगणय्य तत्प्रदेशैकैकप्रान्तात् तदपरप्रान्तस्य गृहादेश्चान्तर्गतकोणे विद्धे लब्धे क्रमेण कोणमाने ४०° । २५′ (आ), ३७° । ४८′ (का) तथा च तत्तत्प्रदेशप्रान्तात् तद्गृहं कियति कियत्यन्तरे वर्त्तत इति प्रश्नः ।

$$\text{प्रथमप्रान्ताद्दूरत्वम्} = \frac{\text{अ·ज्याका}}{\text{ज्या( आ + का )}} = ६२\text{·}६१०१ \text{ हस्ताः ।}$$

$$\text{द्वितीयप्रान्ताद्दूरत्वम्} = \frac{\text{अ·ज्याआ}}{\text{ज्या( आ + का )}} = ६६\text{·}२२९८२ \text{ हस्ताः ।}$$

(५) कस्याश्चिद्दुस्तरनद्याः पात्रविस्तृत्यवगमायावाक्तीरे ६० (अ) हस्तमितं तिर्यक् प्रदेशं विगणय्य तत्तत्प्रदेशप्रान्तात् तदपरप्रान्तस्य परतीरवर्त्तिनः कस्यचित् प्रस्तरादेश्चान्तर्गतकोणे विद्धे लब्धे क्रमेण कोणमाने ४२° । १७′ (आ) । ५२° । ३५′ (का) तथा च तस्या नद्याः कियती विस्तृतिरिति प्रश्नः ।

$$\text{नदीविस्तृतिः} = \frac{\text{अ·ज्याआ·ज्याका}}{\text{ज्या(आ+का)}} = ३२\text{·}१७७६८ \text{ हस्ताः ।}$$

(६) काश्यां गङ्गापात्रे वर्त्तमानायाः कस्याश्चिन्महातरण्याः संमुखतटदेशवर्त्तिनि चत्वारिंशत् (अ) हस्तौच्च्ये गृहे स्थितेन मनुजेन तद्गृहोर्ध्वतलदेशाभ्यां प्रत्येकं समसूत्रादधरांशा विद्धाः क्रमेण ४०° । १५′ (आ), २५° । ३०′ (का) एतन्मिता लब्धाः । तथा च तद्गृहतलं गङ्गापात्रजलपृष्ठसमदेशात् कियत्यामुच्छ्रित्यां वर्त्तते तदुच्छ्रितिदेशमूलाच्च सा महानौः कियति दूरे वर्त्तत इति प्रश्नः ।

$$\text{उच्छ्रितिः} = \frac{\text{अ.कोज्याआ.ज्याका}}{\text{ज्या(आ}-\text{का)}} = १५\cdot६२२५६ \text{ हस्ताः ।}$$

$$\text{दूरत्वम्} \frac{\text{अ.कोज्याआ.कोज्याका}}{\text{ज्या(आ}-\text{का)}} = १०८\cdot२२८९ \text{ हस्ताः ।}$$

( ७ ) कस्यचित् पर्वतस्य शिखरे ५० ( अ ) हस्तौच्च्यं देवगृहं वर्त्तते तस्याग्रमूलयोस्तत्पर्वतोपत्यकायां स्थितेन मनुजेन विद्धयोर्लब्धे क्रमेणोन्नतांशमाने ५१° । ४०′ ( आ ) । ५०° । १५′ ( का ) तथा च तत्पर्वतौच्च्यं कियदिति प्रश्नः ।

$$\text{औच्च्यम्} = \frac{\text{अ.कोज्याआ.ज्याका}}{\text{ज्या(आ}-\text{का)}} = ९६४\cdot४१२४ \text{ हस्ताः ।}$$

( ८ ) कस्यचिन्महासरसो दक्षिणोत्तरभागयोरीश्वरप्रासादे वर्त्तते तयोरन्तरप्रदेशावगमाय तत्सरसः पूर्वभागे तथा वंशो निखनितो यथा स दक्षिणप्रासादात् २०० ( अ ) हस्तान्तरे स्यादुदक्प्रासादाच्च ८० ( क ) हस्तान्तरे भवेत् । ततो दक्षिणप्रासादाद्वंशोदक्प्रासादयोरन्तर्गत-कोणे विद्धे लब्धा अंशाः २१° । १७′ (का) अत्र पृच्छा तयोः प्रासा-दयोरन्तरं कियदिति ।

$$\text{अन्तरम्} = \text{अ.कोज्याका} \pm \sqrt{\text{क}^2 - \text{अ}^2\text{ज्या}^2\text{क}}$$
$$= २१९\cdot९७२ \text{ वा } १५२\cdot७५ \text{ हस्ताः ।}$$

(९) समुद्रान्तः प्रविष्टयोर्भूदेशयोरग्रयोर्महान्तौ शाल्मलीवृक्षावा-साते । तयोरन्तरप्रदेशावगमाय भूमिस्थात् कस्माच्चित् स्थानात् प्रति-वृक्षपर्यन्तं गणितौ प्रदेशौ क्रमेण १५० ( अ ), २०० ( क ) हस्ता-त्मकौ स्याताम् । एवं तस्मादेव स्थानात् तयोर्वृक्षयोरन्तरगतकोणे विद्धे लब्धाः किलांशाः ५०° । २७′ ( गा ) तथा च तयोर्वृक्षयोरन्तरप्रदेशः कियानिति प्रश्नः ।

अन्तरप्रदेशः $=\sqrt{अ^2+क^2-2अक\ कोज्यागा}$ = १५५·८७हस्ताः।

( १० ) पर्वतशिखरे प्रस्तरमयस्तम्भो वर्त्तते तस्यौच्च्यावगमाय तत्पर्वतनिकटभूमौ स्थित्वा स्तम्भाग्रोन्नतिवेधे लब्धा अंशाः ३१°। २०′ ( आ ) ततः स्तम्भदिश्येवाग्रे सरलभूमौ १५० ( अ ) हस्तमितदेशं गत्वा स्तम्भाग्रमूलोन्नत्योर्वेधे कृते लब्धाः क्रमेणांशाः ४५°। ४२′ ( का )। ३५°। ३२′ ( गा ) तथा च स्तम्भौच्च्यं कियत् पर्वतौच्च्यं च कियदिति प्रश्नः।

$$स्तम्भौच्च्यम् = \frac{अ.ज्याआ\ ज्या(का-गा)}{कोज्यागा.ज्या(का-आ)} = ६८·०९१\ हस्ताः$$

$$पर्वतौच्च्यम् = \frac{अ.ज्याआ\ कोज्याका\ ज्यागा}{कोज्यागा\cdot ज्या(का-आ)} = १५६·८९८४\ हस्ताः$$

( ११ ) यस्याः क्रमनिम्नभूमेः समानभूमौ प्रावण्यं ३९°। १५′ ( आ ) अंशा यस्याश्चाधरप्रान्तो दुस्तरनद्यास्तटं भवति तस्याः परतीरे एकं देवगृहं वर्त्तते तस्यौच्च्यावगमाय तद्देवगृहसंमुखमेव तत्क्रमनिम्नोर्व्या उपरितनप्रान्ते गणकेन स्थित्वा देवगृहशिखरे विद्धे लब्धा अधरांशाः ११°। ३०′ ( का ) एवं स देवालयसंमुखदिश्येव तां क्रमनिम्नभूमिं २०० ( अ ) हस्तमितामवरुह्य तद्भूमेरधरप्रान्तं प्राप्य पुनस्तद्देवगृहाग्रे विद्धे लब्धा उन्नतांशाः २९°। २०′ ( गा ) तथा सति नद्या विस्तृतिः कियती देवगृहस्यौच्च्यं च कियदिति प्रश्नः।

$$नद्या\ विस्तृतिः = \frac{अ.ज्या(आ-का)\ कोज्यागा}{ज्या(का+गा)} = १२४·१६।$$

$$देवगृहौच्च्यम् = \frac{अ\ ज्या(आ-का)\ ज्यागा}{ज्या(आ+गा)} = ६९·७७।$$

( १२ ) भूमौ निखनितस्य द्वात्रिंशद्धस्त-( अ ) परिमाणौच्च्यस्य सरलवंशस्य मूलमभितः सर्वासु दिक्षु प्रवण आस्ते । तस्य समानभूमौ प्रावण्यं किल विंशतिरंशाः (आ°)। अथ तस्मिन् वंशे वातवेगेनैकदेशे भग्ने तस्याग्रं वंशमूलात् षोडश-( क ) हस्तान्तरे लग्नम्, तथा सति वंशो मूलात् कियत्सु हस्तेषु भग्न इति प्रश्नः ।

$$\frac{\text{अ}^2 - \text{क}^2}{2(\text{अ} + \text{क})\,\text{ज्याआ}} = 10\cdot24\text{७}6 \text{ हस्तेषु भग्न इत्युत्तरम् ।}$$

( १३ ) कस्यचित् पर्वतस्य शिखरे १२० ( अ ) हस्तप्रमाणः प्रस्तरस्तम्भो वर्त्तते । तत्पर्वतोपत्यकास्थेन केनचित् पुरुषेण स्तम्भमूलाग्रयोरन्तर्गतकोणे विद्धे लब्धा अंशाः ९° । ४०′ ( आ ) ततः स्तम्भदिश्येवाग्रे २०० ( क ) हस्तमितसमानदेशं गत्वा पुनः स्तम्भमूलाग्रयोरन्तर्गतकोणे विद्धे लब्धास्तावन्त एवांशाः । तथा च पर्वतौच्च्यं कियदिति प्रश्नः ।

$$\text{पर्वतौच्च्यम्} = \tfrac{1}{2}\left\{\sqrt{\left(\frac{\text{अ}}{\text{ज्याआ}}\right)^2 - \text{क}^2} - \text{अ}\right\}$$

$$= २८३\cdot०४३४६५५ \text{ हस्ताः ।}$$

( १४ ) हस्तशतो-( अ )च्छ्रयस्य राजसदनस्योपरिभागे स्थितो गणकः समभुवि दुर्गमस्थाने वर्त्तमानयोर्वृक्षयोरन्तरं जिज्ञासुस्तन्मूलयोरधरांशमाने २° । ५६′ ( आ ), ३° । ११′ ( का ) एतावती अवगत्य तयोरेवान्तर्गतकोण ९° । ४१′ ( गा ) अंशमितं दृष्टवान् । तथा च तयोर्वृक्षयोरन्तरं कियदिति प्रश्नः ।

$$\text{अन्तरम्} = \text{अ}\sqrt{\text{कोछे}^2\text{आ} + \text{कोछे}^2\text{का} - 2\,\text{कोछेआ कोछेका कोज्यागा}}$$

$$= ३५४\cdot३४९ \text{ ।}$$

(१५) एका पूर्वापराऽन्या याम्योत्तरा चेति द्वे भित्ती द्वादश (अ) हस्तोच्छ्रिते स्तः। तत्र यदा पूर्वापराया भित्तेरुत्तरपार्श्वे छाया हस्तचतुष्क-(क) विस्तृता याम्योत्तरायाश्च पश्चिमपार्श्वे छाया हस्तत्रय-(ग) विस्तृता स्यात् तदा रवेरुन्नतिः कियती दिगंशाश्च कियन्त इति प्रश्नः।

$$\text{उन्नतांशाः} = \text{स्प}^{-1} \cdot \frac{\text{अ}}{\sqrt{\text{क}^2 + \text{ग}^2}} = ६७^\circ । २२' । ४८'' ।$$

$$\left.\begin{matrix}\text{पूर्वकाले}\\ \text{उत्तरा दिगंशाः}\end{matrix}\right\} = \text{ज्या}^{-1} \cdot \frac{\text{क}}{\sqrt{\text{क}^2 + \text{ग}^2}} = ५३^\circ । ७' । ४८'' ।$$

(१६) एका पूर्वापरा द्वादश-(अ) हस्तोच्छ्रया भित्तिरस्ति। तस्याः पश्चिमप्रान्ते लग्ना पूर्वदिक्चिह्नात् ६७° । ३०' (आ) अंशान्तरे उत्तरभागे गताऽन्या भित्तिरस्ति साऽपि द्वादशहस्तोच्छ्रया। यदा तयोर्भित्त्योश्छाये तद्बहिर्भाग एव तथा संजाते यथा पूर्वापरायाश्छाया हस्तत्रय-(क) विस्तृता स्यादन्यायाश्च हस्तचतुष्क-(ग) विस्तृता भवेत्। तदा रवेरुन्नतिः कियती दिगंशाश्च कियन्त इति प्रश्नः।

$$\text{उन्नतांशाः} = \text{स्प}^{-1} \cdot \frac{\text{अ}.\text{ज्याआ}}{\sqrt{\text{क}^2 + \text{ग}^2 + \text{२कग}\cdot\text{कोज्याआ}}}$$
$$= ६२^\circ । ११' । ३९'' ।$$

$$\left.\begin{matrix}\text{पूर्वकपाले}\\ \text{उत्तरा दिगंशाः}\end{matrix}\right\} = \text{ज्या}^{-1} \cdot \frac{\text{का}.\text{ज्याआ}}{\sqrt{\text{क}^2 + \text{ग}^2 + \text{२कग}\cdot\text{कोज्याआ}}}$$
$$= २८^\circ । १७' । ५१'' ।$$

(१७) कश्चन गणकः कोणमापकयन्त्रविरहितोऽपि केवलयष्ट्यैव दुस्तरनद्याः पात्रप्रमाणं जिज्ञासुरवास्तीरे (कग) सरलप्रदेशं १७५ पञ्चसप्तत्युत्तरशतहस्तमितं गणयित्वा परतीरस्य (अ) चिह्नं (क)–

स्थानाद्यस्यां दिशि वर्त्तते तद्विरुद्धदिशि ( कघ ) प्रदेशं पष्टिहस्तमितं विगणय्य ( गघ ) प्रदेशे गणिते लब्धा हस्ताः २१४ ततः ( ग ) स्थानाद्यस्यां दिशि ( अ ) चिह्नं वर्त्तते तद्विपरीतदिशि ( गच ) प्रदेशं ९० हस्तमितं विगणय्य ( कच ) प्रदेशे गणिते लब्धा हस्ताः २१५ तथा च तन्नद्याः पात्रप्रमाणं कियदिति प्रश्नः ।

पात्रप्रमाणम् = २००·८६२८ हस्ताः ।

( १८ ) यस्याः समानभूमौ प्रावण्यं विंशतिः २०° ( आ ) अंशास्तादृश्याः क्रमनिम्नभूमेरुपरितनभागेऽस्ति शत-( अ ) हस्तोच्छ्रयः कश्चन तरुः । तस्य संमुखदेश एव क्रमनिम्नोर्व्या अधस्तनभागे वृक्षाद्धस्तशतद्वया-( क )न्तरेऽस्त्येकोदकपूर्णा वापी । तथा च तद्वृक्षाग्रभागस्थयोर्वानरयोरेकस्तत उत्तीर्य वापीमगादपरश्च ततः किञ्चिदुड्डीय कर्णमार्गेण तामगात् । तथा च तयोर्गत्योः समत्व उड्डीनमानं कियदिति प्रश्नः ।

$$\text{उड्डीनमानम्} = \frac{\text{अक}(१ - \text{ज्याआ})}{२\text{अ} - \text{क}\ (१ + \text{ज्याआ})} = २८\cdot०९४५४५\ ।$$

( १९ ) सरलवंशस्याग्रे (अ) हस्तदैर्घ्यस्य समानप्रदेशस्य प्रान्तयोः प्रत्येकं स्थित्वा विद्धे लब्धास्तुल्या एव ( आ ) संख्याका उन्नतांशाः । तस्य च मध्यभागे स्थित्वा वंशाग्रे विद्धे लब्धा ( का ) उन्नतांशाः । तथा च तस्य वंशस्योच्छ्रितिः कियती प्रदेशमध्यस्थानाद्दूरत्वं च कियदिति प्रश्नः ।

$$\text{उच्छ्रितिः} = \frac{\text{अ}.\text{ज्याआ}.\text{ज्याका}}{२\sqrt{\text{ज्या}(\text{आ}+\text{का}).\text{ज्या}(\text{आ}-\text{का})}}\ ।$$

$$\text{दूरत्वम्} = \frac{\text{अ}\ \text{ज्याआ}.\text{कोज्याका}}{२\sqrt{\text{ज्या}(\text{का}+\text{आ}).\text{ज्या}(\text{का}-\text{आ})}}\ ।$$

(२०) अ, क, ग संज्ञकेषु त्रिषु स्थानेषु (अ) स्थानात् (क) स्थानं प्राच्यां दिशि वर्त्तते (ग) स्थानं च प्राक्चिह्नतो दक्षिणभागे (अ) अंशान्तरे वर्त्तते । अथ (कग) स्थानयोरन्तरप्रदेशः (अ) हस्तमितोऽस्ति किन्तु तस्य दुर्गमत्वात् कस्मिंश्चिन्मनुजे (क) स्थानात् (अ) स्थानं गत्वा ततः (ग) स्थानं याते तेन (क) हस्तमितः प्रदेशोऽतिक्रान्तः । तथा च (क) स्थानात् (अ) स्थानं कियद्दूरे (अ) स्थानाच्च (ग) स्थानं कियद्दूरे वर्त्तत इति प्रश्नः ।

$$(\text{क})\ \text{स्थानात्}\ (\text{अ})\ \text{स्थानस्य दूरत्वम्} = \tfrac{१}{२}\text{क} \pm \frac{\sqrt{\text{अ}^{२} - \tfrac{१}{२}\text{उआ}.\text{क}^{२}}}{२\text{कोज्या}\ \tfrac{१}{२}\text{आ}}$$

$$(\text{अ})\ \text{स्थानाच्च}\ (\text{ग})\ \text{स्थानस्य दूरत्वम्} = \tfrac{१}{२}\text{क} \mp \frac{\sqrt{\text{अ}^{२} - \tfrac{१}{२}\text{उआ}\ \text{क}^{२}}}{२\text{कोज्या}\ \tfrac{१}{२}\text{आ}}$$

इति त्रिकोणमितितन्त्रे चतुर्थोऽध्यायः ।

अथ

त्रिकोणमितौ ग्रन्थकृदुक्तविंशतिप्रश्नानां

# सुवासनागणिताभ्यां सहोत्तराणि ।

## ( १ ) प्रश्नस्योत्तरम् ।

कल्प्यते अइउक आयतक्षेत्रं यस्यैको भुजः अइ=अ=५० हस्ताः । अत्र अइ-भुजस्य इ-प्रान्ते स्थित्वा उक-भुजस्य क-प्रान्तवेधेन लब्धा. कोणांशा.=३०°=आ । एवमिह इउक-जात्यत्रिभुजे

$$\frac{\text{ज्या}६०^\circ}{\text{ज्या}३०^\circ} = \frac{\text{इउ}}{\text{अइ}} \therefore \text{इउ} = \frac{\text{अइ} \times \text{ज्या}६०^\circ}{\text{ज्या}३०^\circ}$$

$$= \frac{\text{अइ}}{\frac{\text{ज्या}३०^\circ}{\text{ज्या}६०^\circ}} = \frac{\text{अइ}}{\text{स्प}३०^\circ} = \frac{\text{अ}}{\text{स्पआ}} \quad । \quad \text{ज्या}३०^\circ = \frac{१}{२},$$

$$\therefore \text{ज्या } ६०^\circ = \frac{\sqrt{३}}{२} \therefore \text{स्पआ} = \frac{\frac{१}{२}}{\frac{\sqrt{३}}{२}} = \frac{१}{\sqrt{३}}$$

$\therefore$ इष्टभुजः $= \dfrac{\text{अ}}{\dfrac{1}{\sqrt{3}}} = \text{अ} \times \sqrt{3} = 50\sqrt{3}$

$= \sqrt{2500 \times 3} \quad = \sqrt{7500}$ अस्य ८१तमपृष्ठस्थनवीन-मूलानयनरीत्या मानम् $= 86.6024$ ।

## (२) प्रश्नस्योत्तरम् ।

कल्प्यते चतदन-समभूमेरुपरि पूर्वापरायता १५हस्तोच्छ्रिता भित्तिरस्ति । भित्तिमूलात् च-स्थानाद् दक्षिणतः त-स्थाने उत्थाय रात्रौ यदुत्तरं विलोक्यते तदा ध्रुवतारा तद्भित्तेरग्रप्रदेशे ग-बिन्दावेव दृश्यते । अत्र ध्रुवोन्नतिरपेक्ष्या । उक्ते गचतत्रिभुजे अ, क, ग क्रमेण भुजाः, कोणाश्च आ, का, गा । जातत्वात् गा $= 90^\circ$ ।

अत्र $\dfrac{\text{ज्याआ}}{\text{ज्याका}} = \dfrac{\text{ज्याआ}}{\text{कोज्याआ}} = \dfrac{\text{अ}}{\text{क}}$

$\therefore$ स्पआ $= \dfrac{\text{अ}}{\text{क}}$

अतोऽस्ये ९७तमपृष्ठस्यपञ्चमोदाहरणानुसारेण प्रघातमापकरूपम् ।

प्रघात्स्पआ $= 10 +$ प्रघा$_{\text{द}}$अ $-$ प्रघा$_{\text{द}}$क

$= 10 + .1760912 - .5440680 = 9.6320232$ ।

अत्र 'लघुरिक्थ'-सारिणीत प्रघा$_{द}$(२३° । ११')
= ९·६३१७०३७

अथ ९·६३२०२९५ − ९·६३१७०३७ = ३२५८

∴ प्रघा$_{द}$(२३° । ११') − प्रघा$_{द}$(२३° । १२') = ३४९०

$$\therefore \frac{३२५८ \times ६०''}{३४९०} = \frac{१९५४८}{३४९} = ५६$$

∴ प्रघा$_{द}$स्पष्टा = ९·६३२०२९५ = प्रघा$_{द}$(२३° । ११' । ५६")

∴ आ-कोण = २३° । ११' । ५६" इयमेव ध्रुवोन्नति ।

## ( ३ ) प्रश्नस्योत्तरम् ।

दतन समानभूमाविष्टप्रमाणो जद-वंशोऽस्ति यस्य द-मूलाद् दतप्रदेशस्य त-स्थाने कश्चिद् द्रष्टा स्थित । तस्मात् ज वंशाग्रवेधेन∠जतद = गा = ५७° । ४०' । अथ दतमार्गमपहायान्य तन-मार्गमनुसृत्य शतद्वयमिते तन-तुल्ये अ-प्रदेशे गतेन तेनैव द्रष्ट्रा वंशाग्र विद्धम् । यत्र ∠जनत = ∠आ = ५०° । १२', एव ∠जतन = ∠का = ४०° । २३' । अत जतन-त्रिभुजे तजन कोणस्यापि ज्ञान सुलभम् । अत्र वंशोच्छ्रितिरवगम्या । एतदर्थं प्रथम जतप्रमाणमानीयते तद्यथा—

$$\frac{अ}{ज्या\{१८० - (आ + का)\}} = \frac{अ}{ज्या(आ + का)} = \frac{जत}{ज्याआ}$$

$$\therefore \frac{\text{अ} \times \text{ज्याआ}}{\text{ज्या(आ+का)}} = \text{जत}$$

$$\therefore \text{जद} = \frac{\text{जत} \times \text{ज्यागा}}{१} = \frac{\text{अ} \times \text{ज्याआ} \times \text{ज्यागा}}{\text{ज्या(आ + का)} \times १}$$

$$\therefore \text{प्रघा}_{द}\text{जद} = \text{प्रघा}_{द}\text{अ} + \text{प्रघा}_{द}\text{ज्याआ} + \text{प्रघा}_{द}\text{ज्यागा}$$

$$- \text{प्रघा}_{द}\text{ज्या(आ + का)} - \text{प्रघा}_{द}१$$

$$= \cdot३०१०३०० + ९\cdot९२६८३१४ + ९\cdot८८५५२१५$$

$$- ९\cdot९९९९७४८ - १०$$

$$= \left\{ \begin{array}{r} २०\cdot११३३८२९ \\ -१९\cdot९९९९७४८ \\ \hline \cdot११३४०८१ \end{array} \right. = \text{प्रघा}_{द}\text{जद} = \text{प्रघा}_{द}१२९\cdot८४$$

$$\therefore \text{जद} = १२९\cdot८४ \text{।}$$

## (४) प्रश्नस्योत्तरम् ।

कल्प्यते अकछघ-प्रदेशे किमपि गृहं वर्त्तते यत्र वेध्यस्थानम् उ। तद्गृहं च यस्या नद्यास्तटेऽस्ति तयोऽन्यस्मिन् पारे अ-स्थाने विद्यमानेन केन चिद्द्रष्ट्रा तत् स्थानं विद्धा तत एक शतहस्तमितं प्रदेशं तिर्यग्-गत्वा पुनस्तदेव स्थानं विद्धम् । तत्र कोणौ $\angle$आ $= ४०^\circ$ । २५′ $\angle$का $= ३७^\circ$ । ४८′ अतः स्थानद्वयाद्गृहान्तरे अपेक्ष्ये ।

$$१०० = \text{अ} \text{।} \frac{\text{अ}}{\text{ज्या}\{१८०-(\text{आ}+\text{का})\}} = \frac{\text{अ}}{\text{ज्या(आ+का)}} = \frac{\text{इउ}}{\text{ज्याआ}}$$

$$= \frac{\text{गउ}}{\text{ज्याका}} \therefore \text{इउ} = \frac{\text{अ} \times \text{ज्याआ}}{\text{ज्या(आ+का)}},$$

एवम् $\text{गउ} = \frac{\text{अ} \times \text{ज्याका}}{\text{ज्या(आ+का)}}$ ।

द्वयो. क्रमेण प्रघातमापकरूपे ।

$\text{प्रघा}_{\text{द}}\text{इउ} = \text{प्रघा}_{\text{द}}\text{अ} + \text{प्रघा}_{\text{द}}\text{ज्याआ} - \text{प्रघा}_{\text{द}}\text{ज्या(आ+का)}$

$= \cdot००००००० + ९\cdot८११८०३८ - ९\cdot९९०७५०२$

$= -\cdot१७८९४६४ = \cdot८२१०५३६ = \text{प्रघा}_{\text{द}}(६६\cdot२३)$

$\therefore$ इउ=६६ २३ ।

एवम् $\text{प्रघा}_{\text{द}}\text{गउ} = \text{प्रघा}_{\text{द}}\text{अ} + \text{प्रघा}_{\text{द}}\text{ज्याका} - \text{प्रघा}_{\text{द}}\text{ज्या(आ+का)}$

$= \cdot००००००० + ९\cdot७८७३९४६ - ९\cdot९९०७५०२$

$= -\ २०३३५५६ = \cdot७९६६४४४ = \text{प्रघा}_{\text{द}}(\text{६२ ६१})$

एव यत्र ऋणमानं सपद्यते तत्र तद्रूपाद्विशोध्य धनमानमवगम्यम् ।

## (५) प्रश्नस्योत्तरम् ।

कल्प्यते नद्या अपरतटस्थ' कश्चिद् पदार्थ' उ। आ-प्रदेशस्थेन तं विध्यता द्रष्ट्रा आ कोणो ज्ञातस्तथा अ-पष्टिमित हस्तान्तर तिर्यग्गत्वा तमेव विध्यता तेन का कोणोऽपि ज्ञात । एव त्रिभुजस्य कोणाभ्या तदन्तर्वर्तिना भुजेन च नदीविस्तारोऽवगम्य ।

दर्शितक्षेत्रे $१८०^\circ - (\text{आ} + \text{का}) = \text{उ}$कोणः ।

$$\therefore \text{उका} = \frac{\text{अ} \times \text{ज्याआ}}{\text{ज्या}(\text{आ} + \text{का})}$$

$$\therefore \text{नदीविस्तारः} = \text{उइ} = \frac{\text{अ} \times \text{ज्याआ} \times \text{ज्याका}}{\text{ज्या}(\text{आ} + \text{का}) \times १}$$

अस्य प्रघातमापकरूपम् ।

$\text{प्रघा}_{\text{द}}\text{उइ} = \text{प्रघा}_{\text{द}}\text{अ} + \text{प्रघा}_{\text{द}}\text{ज्याआ} + \text{प्रघा}_{\text{द}}\text{ज्याका}$
$\quad - \text{प्रघा}_{\text{द}}\text{ज्या}(\text{आ} + \text{का}) - १०$

$= \cdot ७७८१५१३ + ९\cdot ८२७८८४३ + ९\cdot ८९९९५०६$
$\quad - ९\cdot ९९८४३१५ - १०$

$= २०\cdot ५०५९८६२ - १९\cdot ९९८४३१५$

$= \cdot ५०७५५४७ = \text{प्रघा}_{\text{द}} ३२\cdot १८$

$\therefore$ उइ = नदीविस्तारः = ३२·१८.... ।

अथ केवलरेखागणितेनास्य प्रकारान्तरोपपत्तिः ।

अन्यथाऽपि नदीविस्तारोऽवगन्तुं शक्यते कल्प्यते-नद्या अपरपार्श्वे कश्चिद् उ-बिन्दु । अ-बिन्दुस्थेन द्रष्ट्रा तथाऽवलोक्यते यथा नदीतटरूपायाम् अक-रेखायाम् उअ-रेखा लम्बरूपा भवेत् । तत इ-बिन्दुर्यावति दूरे याद्दिशि तावति दूरे ताद्दिशयैव क-बिन्दौ गत्वा तथा कग रूपाया

लम्बरेखायां स द्रष्टा चलितो यथा इ बिन्दु पश्यन् उ बिन्दुमपि पश्येत् तदा ( रे.१अ.२६प्र ) अउ = कग, अयमेव नदीविस्तार सुसिद्ध. ।

अइ = गृहोच्चयम् = अ । अ-बिन्दुर्गृहोर्ध्वप्रदेश । इ-बिन्दुर्गृहतलप्रदेश । उ बिन्दुस्था महानौ । कउ = उच्छ्रितिप्रदेशमूलान्नौकाधिष्ठितप्रदेशदूरता ।

अस्मिन् प्रश्ने "गृहतलोर्ध्वदेशाभ्याम्"—इत्यत्र "गृहोर्ध्वतलदेशाभ्याम्"—इत्यनेन भवितव्यम् ।

अइउ-त्रिभुजे $इउ = \frac{अइ \times कोज्याका}{ज्या(आ-का)}$ ,

कइउ त्रिभुजे $कइ = \frac{इउ \times ज्याका}{१} = \frac{अइ \times कोज्याआ.ज्याका}{१ \times ज्या(आ-का)}$

$= \frac{अ \times कोज्याआ \times ज्याका}{१ \times ज्या(आ-१क)} =$ उच्छ्रिति ।

अत्रैव $कउ = \frac{अ \times कोज्याआ \times कोज्याका}{१ \times ज्या(आ-का)} =$ दूरता ।

द्वयो प्रघातमापकरूपे ।

प्रघा$_{द}$कइ

= प्रघा$_{द}$अ + प्रघा$_{द}$कोज्याआ + प्रघा$_{द}$ज्याका − प्रघा$_{द}$ज्या(आ − का) − १०

= प्रघा$_{द}$४० + प्रघा$_{द}$कोज्या(४०° । १५′) + प्रघा$_{द}$ज्या(२५° । ३०′)

प्रघा$_{द}$ज्या(४०° । १५′ − २५° । ३०′) − १० ।

$$\left\{\begin{array}{l} +\ \text{·६०२०६००} \\ +\text{९·८८२६९६८} \\ +\text{९·६३३९८४४} \\ -\text{१०·} \\ -\text{९·४०५८६१७} \end{array}\right\} = \begin{array}{r} +\ \text{२०·११८७०१२} \\ -\ \underline{\text{१९·४०५८६१७}} \\ \text{·७१२८३९५} \end{array}$$

= प्रघा$_{द}$५१·६२४८

∴ कइ = उच्छ्रितिः = ५१·६२४८ प्रश्नोत्तरे उच्छ्रितिः

कइ = १५·६२२५६ प्रायः प्रामादिकीति विज्ञैर्ज्ञेयम् ।

अथैवं प्रघा$_{द}$कत्त

= प्रघा$_{द}$अ + प्रघा$_{द}$कोज्याआ + प्रघा$_{द}$कोज्याका

− प्रघा$_{द}$ज्या(आ − का) − १०

= प्रघा$_{द}$(४०) + प्रघा$_{द}$ज्या ४९° । ४५′) + प्रघा$_{द}$ज्या(६४° । ३०′)

− प्रघा$_{द}$ज्या(४०° । १५′ − २५° । ३०′) − १० ।

$$\left\{\begin{array}{l} +\ \text{·६०२०६००} \\ +\text{९·८८२६५६८} \\ +\text{९·९५५४८८२} \\ -\text{९·४०५८६१७} \\ -\text{१०} \end{array}\right\} = \left\{\begin{array}{r} +\ \text{२०·४४०९०५०} \\ -\ \underline{\text{१९·४०५८६१७}} \end{array}\right\} \begin{array}{r} \\ \text{१·०३४३४३३} \end{array}$$

= प्रघा$_{द}$१०८·२२९७

∴ दूरता = १०८·२२९७ ।

## (७) प्रश्नस्योत्तरम्।

अत्र (न) पर्वतोपत्यकाभूमौ वेध्यस्थानम्। चग-पर्वतस्य ग-शिखरे कग-देवगृहम्। न-स्थानतो देवगृहाग्रवेधेन उन्नतांशाः $\angle$कनच = आ, एवं देवगृहमूलवेधेन उन्नतांशाः $\angle$गनच = का, कग = अ।

आ = ५१°। ४०′। का = ५०°। १५′। अ = ५० हस्ताः।

अत्र कनच-त्रिभुजस्य जात्यात्

$$\angle \text{चकन} = ९०^\circ - \angle \text{कनच} \therefore \frac{\text{कग}}{\text{ज्या}\angle\text{कनग}} = \frac{\text{गन}}{\text{ज्या}\angle\text{गकन}}$$

$$= \frac{\text{अ}}{\text{ज्या(आ} - \text{का)}} = \frac{\text{गन}}{\text{कोज्याआ}}$$

$$\therefore \text{गन} = \frac{\text{अ} \times \text{कोज्याआ}}{\text{ज्या(आ} - \text{का)}} ।$$

$$\therefore \frac{\text{गन}}{१} = \frac{\text{चग}}{\text{ज्या}\angle\text{गनच}} = \frac{\text{अ} \times \text{कोज्याआ}}{\text{ज्या(आ} - \text{का)} \times १} = \frac{\text{चग}}{\text{ज्याका}}$$

$$\therefore \text{चग} = \text{पर्वतोच्चत्वम्} = \frac{\text{अ} \times \text{कोज्याआ} \times \text{ज्याका}}{\text{ज्या(आ} - \text{का)} \times १} .$$

$$\therefore \text{प्रघा}_{\text{द}}\text{चग} = \text{प्रघा}_{\text{द}}\text{अ} + \text{प्रघा}_{\text{द}}\text{कोज्याआ} + \text{प्रघा}_{\text{द}}\text{ज्याका}$$

$$- \text{प्रघा}_{\text{द}}\text{ज्या(आ} - \text{का)} - \text{प्रघा}_{\text{द}}\text{ज्या}(९०)$$

$$\left\{\begin{array}{r} \cdot\text{६९८९७००} \\ +\text{९}\cdot\text{७९२५५६६} \\ +\text{९}\cdot\text{८८९८३७०} \\ \hline +\text{२०}\cdot\text{३७७३६३६} \\ -\ \text{८}\cdot\text{३९३१००८} \\ -\text{१०} \\ \hline \text{१}\cdot\text{९८४२६२८} \end{array}\right\} \begin{array}{l} \therefore \text{प्रघा}_{\text{द}}\text{घग} = \text{१}\cdot\text{९८४२६२८} \\ \therefore \text{घग} = \text{९६४}\cdot\text{४१२६ एतदेव} \\ \quad \text{पर्वतौच्च्यम् ।} \end{array}$$

## (८) प्रश्नस्योत्तरम् ।

अस्मिन् प्रश्ने प्रासादो वर्त्तते इत्यत्र "प्रासादे वर्त्तते" इत्यशुद्धिः । द-सरसो दाक्षिणभागः । उ-उत्तरभागः । वं-पूर्वभागे द-स्थानात् अ-हस्तान्तरे तथा उ स्थानात् क-हस्तान्तरे वंशमूलम् । अत्र वंदउ-कोणो वेधेन ज्ञातः=का, दवं=अ, उवं=क ।

$$\therefore (\text{३८}) \text{ प्रक्रमतः कोज्याका} = \frac{\text{अ}^2 + \text{दउ}^2 - \text{क}^2}{\text{२अ.दउ}}$$

$$\therefore \text{क}^2 - \text{अ}^2 = \text{दउ}^2 - \text{२अ.दउ.कोज्याका}$$

$$\therefore \text{क}^2 - \text{अ}^2 + \text{अ}^2\text{.कोज्या}^2\text{का}$$

$$= \text{दउ}^2 - \text{२अ.दउ.कोज्याका} + \text{अ}^2\text{. कोज्या}^2\text{का}$$

$$\text{क}^2 - \text{अ}^2(\text{१} - \text{कोज्या}^2\text{का})$$

$$\therefore \pm\text{मू} = \text{दउ} - \text{अ.कोज्याका} \ \therefore \text{अ.कोज्याका} \pm \text{मू} = \text{दउ}$$

$$\therefore \text{दउ} = \text{अ.कोज्याका} + \sqrt{\text{क}^2 - \text{अ}^2\text{.ज्या}^2\text{का}}$$

$$\text{वा दउ} = \text{अ.कोज्याका} - \sqrt{\text{क}^2 - \text{अ}^2\text{.ज्या}^2\text{का}}$$

अत्र अ.कोज्याका = ग कल्प्यते, तदा प्रघा$_{\text{द}}$ग

$$= \text{प्रघा}_{\text{दृ}}\text{भ} + \text{प्रघा}_{\text{दृ}}\text{कोज्याका} = \begin{cases} २\cdot३०१०३०० \\ ९\cdot९६९३२१२ \\ \hline १२\cdot२७०३५१२ \end{cases}$$

$\therefore$ ग = १८६·३६१ । अथ क$^२$ − अ$^२$.ज्या$^२$का एतन्मूलार्थं अ$^२$.ज्या$^२$का = च$^२$ कल्प्यते तदा प्रघा$_{\text{दृ}}$च

$$= \text{प्रघा}_{\text{दृ}}\text{भ} + \text{प्रघा}_{\text{दृ}}\text{ज्याका} = \begin{cases} २\cdot३०१०३०० \\ ९\cdot५५९८८२९ \\ \hline ११\cdot८६०९१२९ \end{cases}$$

$\therefore$ प्रघा$_{\text{दृ}}$च$^२$ = २(११·८६०९१२९) = २३·७२१८२५८

$\therefore$ च$^२$ = ५२७०·१८

$\therefore$ दव = अ.कोज्याका $\pm \sqrt{\text{क}^२ - \text{अ}^२.\text{ज्या}^२\text{का}}$

$= \text{ग} \pm \sqrt{\text{क}^२ - \text{च}^२} \quad = \text{ग} \pm \sqrt{६४०० - ५२७०\cdot१८}$

$= \text{ग} \pm \sqrt{११२९\cdot८२} \quad = \text{ग} \pm ३३\cdot६११$

$= १८६\cdot३६१ \pm ३३\cdot६११ = \begin{cases} २१९\cdot९७२ \\ \text{वा } १५२\cdot७५ \end{cases}$

$\therefore$ दव = २१९·९७२ वा १५२·७५

## ( ९ ) प्रश्नस्योत्तरम् ।

अत्र शा, शा शाखमञ्जीवृक्षौ, वे.स्था वेध्यस्थानम् । ततः अ, क भुजौ तदन्तर्गतकोणश्चैते ज्ञाताः । एभ्यो ग-भुजप्रमाणमन्वेष्यम् ।

(३८) प्रक्रमतः कोज्यागा $= \frac{अ^{२} + क^{२} - ग^{२}}{२अ.क}$

$\therefore$ २अ.क.कोज्यागा $=$ अ$^{२}$ $+$ क$^{२}$ $-$ ग$^{२}$

$\therefore$ ग$^{२}$ $=$ अ$^{२}$ $+$ क$^{२}$ $-$ २अ.क.कोज्यागा

$\therefore$ ग $= \sqrt{अ^{२} + क^{२} - २अ.क.कोज्यागा}$

अत्र २अ.क.कोज्यागा $=$ च

$\therefore$ प्रघा$_{द}$च $=$ प्रघा$_{द}$२ $+$ प्रघा$_{द}$अ $+$ प्रघा$_{द}$क $+$ प्रघा$_{द}$कोज्यागा

$$= \left\{ \begin{array}{l} ·३०१०३०० \\ २·१७६०९१३ \\ २·३०१०३०० \\ ९·८०३९६९९ \end{array} \right\} \therefore \text{प्रघा}_{द}\text{च} = १४·५८२१२१२$$

१४·५८२१२१२

$\therefore$ च $=$ ३८२०५·११४

$\therefore$ ग $= \sqrt{अ^{२} + क^{२} - ३८२०५·११४}$

$= \sqrt{२२५०० + ४०००० - ३८२०५·११४}$

$= \sqrt{६२५०० - ३८२०५·११४}$

$= \sqrt{२४२९४·८८६} =$ १५५·८७

## (१०) प्रश्नस्योत्तरम् ।

चउ = पर्वतौच्च्यम्, तत्र उइ-स्तम्भः, द-प्रथमवेधस्थानम् । ज-पर्वताधःप्रदेशस्थं द्वितीयवेधस्थानम् । इदज-कोणः = आ = ३१° । २०′, इजच-कोणः = का = ४५° । ४२′, उजच-कोणः = गा = ३५° । ३३′ जद = अ = १५०, अत्र पर्वतौच्च्यं स्तम्भोच्छ्रितिश्चैते अपेक्ष्ये ।

दजइ-त्रिभुजे जइद-कोणः = का − आ,

$$\therefore \text{इज} = \frac{\text{अ} \times \text{ज्या आ}}{\text{ज्या}(\text{का} - \text{आ})}$$

$\therefore$ इउज-त्रिभुजे इजउ-कोणः = का − गा

$$\therefore \text{इउ} = \frac{\text{इज} \times \text{ज्या}(\text{का} - \text{गा})}{\text{कोज्या गा}}$$

$$= \frac{\text{अ} \times \text{ज्या आ} \times \text{ज्या}(\text{का} - \text{गा})}{\text{ज्या}(\text{का} - \text{आ})\ \text{कोज्या गा}} \text{ ।}$$

$$\text{इजउ-त्रिभुज एव जउ} = \frac{\text{इज} \times \text{कोज्या का}}{\text{कोज्या गा}}$$

$$= \frac{\text{अ} \times \text{ज्या आ} \times \text{कोज्या का}}{\text{ज्या}(\text{का} - \text{आ})\ \text{कोज्या गा}},$$

$$\therefore \text{उच} = \frac{\text{जउ} \times \text{ज्या गा}}{१} = \frac{\text{अ} \times \text{ज्या आ} \times \text{कोज्या का} \times \text{ज्या गा}}{१ \times \text{ज्या}(\text{का} - \text{आ})\ \text{कोज्या गा}}$$

अनयोः प्रघातमापकरूपे

$$\text{प्रघा}_{\text{द}}\text{इउ} = \text{प्रघा}_{\text{द}}\text{अ} + \text{प्रघा}_{\text{द}}\text{ज्या आ} + \text{प्रघा}_{\text{द}}\text{ज्या}(\text{का} - \text{गा})$$
$$- \text{प्रघा}_{\text{द}}\text{ज्या}(\text{का} - \text{आ}) - \text{प्रघा}_{\text{द}}\text{कोज्या गा}$$

$$= \left\{\begin{array}{l} + \quad ·१७६०९१३ \\ + \ ९·७१६०१६८ \\ + \ ९·२४६०६९५ \\ \hline + १९·१३८१७७६ \end{array}\right\} - \left\{\begin{array}{l} + \ ९·३९४६७२९ \\ + \ ९·९१०४१५५ \\ \hline + १९·३०५०८८४ \end{array}\right\}$$

$$=\left\{\begin{array}{l} +\text{१९·१३८१७७६} \\ -\text{१९·३०५०८८४} \\ \hline -\quad\text{·१६६९१०८} \\ +\quad\text{·८३३०८९२} \end{array}\right\}$$

$\therefore$ प्रघा$_{\text{द}}$इउ $=$ ·८३३०८९२ $\therefore$ इउ $=$ ६८·०३६

प्रघा$_{\text{द}}$उच $=$ प्रघा$_{\text{द}}$अ $+$ प्रघा$_{\text{द}}$ज्याआ $+$ प्रघा$_{\text{द}}$कोज्याका $+$ प्रघा$_{\text{द}}$ज्यागा $-$ १० $-$ प्रघा$_{\text{द}}$ज्या(का $-$ आ) $-$ प्रघा$_{\text{द}}$कोज्यागा

$$=\left\{\begin{array}{l} +\quad\text{·१७६०९१३} \\ +\ \text{९·७१६०१६८} \\ +\ \text{९·८४४११३७} \\ +\ \text{९·७६४४८४९} \\ \hline +\text{२९·५००७०६७} \end{array}\right\}-\left\{\begin{array}{l} +\text{१०·} \\ +\ \text{९·३९४६५२९} \\ +\ \text{९·९१०४१५५} \\ \hline +\text{२९·३०५०६८४} \end{array}\right\}$$

$$=\left\{\begin{array}{l} +\text{२९·५००७०६७} \\ -\text{२९·३०५०६८४} \\ \hline \quad\text{·१९५६३८३} \end{array}\right\}$$

$\therefore$ प्रघा$_{\text{द}}$उच $=$ ·१९५६३८३ $\therefore$ उच $=$ १५६·८९८५

## ( ११ ) प्रश्नस्योत्तरम् ।

अत्र कल्प्यते अपकत = नद्याकृतिभागः । यत्र अ अपरभागे, अद = देवगृहौच्च्यम् । तउ = (वेध्यपार्श्वे) प्रवणभूप्रदेशः । तत्र उ = उच्चभूप्रदेशचिह्नम्, त = तलप्रदेशचिह्नम् । अइ-रेखा त-बिन्दुतः क्षितिजसमानान्तरधरातलगता अप-रेखोपरि तथा तक-रेखोपरि लम्बरूपा, त स्थानात् प्रावण्यकोणः = आ, त-स्थानाद् देवमन्दिराग्रवेधेनोन्नतांशाः = का, उ स्थानाद् देवमन्दिराग्रवेधेनोन्नतांशाः = गा, अतः अत नदीविस्तृतेस्तथा अद-मन्दिरौच्च्यमानस्य च ज्ञानमपेक्ष्यम् ।

अत्रेदमवधेयं यत् उ-स्थानात् क्षितिजसमानान्तरधरातलं तद्वर्धितदेवमन्दिराग्ररेखां स्पृशेत् त-स्थानतस्तथा उ स्थानतश्च क्षितिजसमानान्तरधरातलान्तरादल्पं मन्दिरौच्च्यमिति ।

अत्रोपपत्तिः । तइ, उच-रेखे समानान्तरे तउ-रेखया छिन्ने $\therefore \angle \text{इतउ}$ $= \text{आ} = \angle \text{तउच}$ $\therefore \angle \text{तउच} - \angle \text{दउच} = \text{आ} - \text{का} = \angle \text{तउद}$ ।

अथ $\angle \text{दतउ} = 180^\circ - (\text{आ} + \text{गा})$

$$\therefore \angle \text{तउच} + \angle \text{दतउ} = 180^\circ - (\text{आ} + \text{गा}) + (\text{आ} - \text{का})$$

$$= 180^\circ - (\text{का} + \text{गा}) \quad \therefore \angle \text{तदउ}$$

$$= 180^\circ - \{180^\circ - (\text{का} + \text{गा})\} = \text{का} + \text{गा}$$

$$\therefore \text{तद} = \frac{\text{तउ} \times \text{ज्या}(\text{आ} - \text{का})}{\text{ज्या}(\text{का} + \text{गा})}$$

$$\therefore \text{अत} = \frac{\text{तउ} \times \text{ज्या}(\text{आ} - \text{का}) \; \text{कोज्यागा}}{1 \times \text{ज्या}(\text{का} + \text{गा})}$$

$$\text{अद} = \frac{\text{तउ} \times \text{ज्या}(\text{आ} - \text{का}) \; \text{ज्यागा}}{1 \times \text{ज्या}(\text{का} + \text{गा})}$$

अत्र तउ = भ

$\therefore$ अनयोः प्रघातमापकरूपे—

$$\text{प्रघा}_{\text{द}}\text{अत} = \text{प्रघा}_{\text{द}}\text{भ} + \text{प्रघा}_{\text{द}}\text{ज्या}(\text{आ} - \text{का})$$
$$+ \text{प्रघा}_{\text{द}}\text{कोज्यागा} - 10 - \text{प्रघा}_{\text{द}}\text{ज्या}(\text{का} + \text{गा})$$

अत्र उ-स्थानलम्बःकोणः प्रावणम् = आ, ∴ ∠कअउ = आको, उक त्रिभुजे (३८)प्रक्रमतः—

$$ज्याआ = \frac{अउ^२ + अक^२ - कउ^२}{२अउ.अक}$$, द्वितीयपदे कोटिज्याया ऋणत्वात्

$$कउ^२ = अउ^२ + अक^२ + २अउ.\ अक.\ ज्याआ,$$

$$कउ = अइ - अक\ ∴\ कउ^२ = अइ^२ - २अइ.अक + अक^२,$$

$$∴ अइ^२ - २अइ.अक + \underline{अक^२} = अउ + \underline{अक^२} + २\ अउ.अक.ज्याआ$$

$$∴\ अइ^२ - अउ^२ = २अइ.अक + २अउ.अक.ज्याआ$$

$$= अक\ २(अइ + अउ.\ ज्याआ)$$

$$∴\ अक = \frac{अइ^२ - अउ^२}{२(अइ + अउ.ज्याआ)}$$

अत्र हरे २(अइ + अउ.ज्याआ) द्वितीयखण्डस्य प्रधानमापकरूपम् ।

$$प्रधा_{द्}अउ + प्रधा_{द्}ज्याआ$$

$$= \left.\begin{matrix}\cdot२०४१२०० \\ ९\cdot५३४०५१७\end{matrix}\right\} = ९\cdot७३८१७१७$$

$$∴\ २(अइ + ५\cdot४९९) = २(३२ + ५\cdot४९५)$$

$$= २(३७\cdot४९५) = ७४\cdot९९$$

$$∴\ अक = \frac{अइ^२ - अउ^२}{२(अइ + अउ.ज्याआ)} = \frac{१०२४ - २५६}{७४\cdot९९}$$

$$= १०\cdot२४ \ldots\ldots ।$$

## (१३) प्रश्नस्योत्तरम् ।

कुत्रापि समानभूमौ स्थित्वा कस्य चिदुच्चभूमिष्ठस्य स्तम्भस्याग्रमूलगतसूत्रोत्पन्नकोणो यदि तस्यामेव समानभूमौ स्थानान्तरे स्थितवता विध्यता जनेन पूर्वविद्धाग्रमूलोत्पन्नकोणसमानः कोणः प्राप्तस्तदा स्तम्भप्रमाणरूपाधारे त्रिभुजद्वयमुत्पद्यते ययोः शीर्षलग्नावाधारसंमुखौ कोणौ समानावतस्तत् त्रिभुजद्वयमेकवृत्तान्तर्गतम् । इयमेव संस्थाऽस्मिन् १३प्रश्नेऽप्यतोऽत्र प्रथमवेधस्थानम् (प), द्वितीयवेधस्थानम् (द), स्तम्भमूलम् (स), स्तम्भाग्रम् (अ), चैतेभ्यश्चतुर्भ्यो बिन्दुभ्यश्चतुर्भुजं वृत्तान्तर्गतम् । वेधस्थानान्तरम् दप = २०० = क । अग्रमूलोत्पन्नकोणः $\angle$सपअ = $\angle$सदअ = भा = ९°। ४०′। स्तम्भप्रमाणम् = अस = १२० = अ ।

$$\therefore \text{अदपस-वृत्तव्यासार्धम्}\ \frac{\frac{\text{अस}}{२}\times १}{\text{ज्याभा}} = \frac{\text{अस}}{\text{२ज्याभा}}$$

$$= \frac{\text{अ}}{\text{२ज्याभा}} = \text{कद},$$

$$\therefore \text{कद}^{२} - \text{जद}^{२} = \text{कद}^{२} - \left(\frac{\text{दप}}{२}\right)^{२} = \text{कद}^{२} - \left(\frac{\text{क}}{२}\right)^{२}$$

$$= \frac{\text{अ}^{२}}{\text{४ज्या}^{२}\text{भा}} - \frac{\text{क}^{२}}{४} = \frac{१}{४}\left(\frac{\text{अ}^{२}}{\text{ज्या}^{२}\text{भा}} - \text{क}^{२}\right)$$

$$= \text{चभ}^2 \therefore \frac{१}{२}\sqrt{\frac{\text{अ}^2}{\text{ज्या}^2\text{आ}} - \text{क}^2} = \text{चभ}$$

$$\therefore \frac{१}{२}\sqrt{\frac{\text{अ}^2}{\text{ज्या}^2\text{आ}} - \text{क}^2} - \frac{\text{अ}}{२} = \text{चभ} - \text{सुच}$$

$$\therefore \text{भस} = \frac{१}{२}\left\{\sqrt{\frac{\text{अ}^2}{\text{ज्या}^2\text{आ}} - \text{क}^2} - \text{अ}\right\}$$

$$= \frac{१}{२}\left\{\sqrt{\left(\frac{\text{अ}}{\text{ज्याआ}}\right)^2 - \text{क}^2} - \text{अ}\right\}$$ इदमेव पर्वतौच्च्यम् ।

अत्र कोष्ठकान्तर्गतप्रथमखण्डस्य

प्रघातमापकरूपार्थं यदि $\left(\frac{\text{अ}}{\text{ज्याआ}}\right)^2 = \text{इ}^2$ कल्प्यते

तदा $\text{प्रघा}_{द}\text{इ} = \text{प्रघा}_{द}\text{अ} - \text{प्रघा}_{द}\text{ज्याआ}$

$$\begin{array}{r} + \cdot ०७९१८१२ \\ - ९\cdot २२५०९१८ \\ \hline \cdot ८५४०८९४ \end{array} \therefore \text{प्रघा}_{द}\text{इ} = \cdot ८५४०८९४$$

$$\therefore \text{इ} = ७१४\cdot ६४१९ \therefore \text{इ}^2 = ५१०७१३\cdot ०२५२३५६१$$

$$\therefore \left(\frac{\text{अ}}{\text{ज्याआ}}\right)^2 - \text{क}^2 = ५१०७१३\cdot ०२५ - ४००००$$

$$= ४७०७१३\cdot ०२५$$

$$\therefore \sqrt{\left(\frac{\text{अ}}{\text{ज्याआ}}\right)^2 - \text{क}^2} = ६८६\cdot ०८$$

$$\therefore \frac{१}{२}\left\{\sqrt{\left(\frac{\text{अ}}{\text{ज्याआ}}\right)^2 - \text{क}^2} - \text{अ}\right\} = २८३\cdot ०४$$

इदमेव पर्वतौच्च्यमानमिति ।

## (१४) प्रश्नस्योत्तरम् ।

कल्प्यते

अत्र मग = राजसदनोच्छ्रितिः ।

प्र = प्रथमवृक्षमूलम् ।

द्वि = द्वितीयवृक्षमूलम् ।

प्र-द्वि = वृक्षमूलान्तरम् ।

गघ-गछ-रेखे अधरांशकोणज्ञानार्थं

पृष्ठस्था टिप्पण्यवलोक्या ।

गमप्रत्रिभुजस्य जात्यत्वात् गप्र

गमद्वित्रिभुजस्यापि जात्यत्वात्

∴ गप्रद्वि-त्रिभुजे 'प्रद्वि' वृक्ष

प्रक्रमतः—

$$\frac{\text{गप्र}^2 + \text{गद्वि}^2 - \text{प्रद्वि}^2}{2\text{गप्र.गद्वि}} = \text{कोज}$$

$\therefore$ गप्र$^2$ + गद्वि$^2$ − प्रद्वि$^2$ =

$\therefore$ प्रद्वि$^2$ = गप्र$^2$ + गद्वि$^2$

$$= \frac{\text{गम}^2}{\text{ज्या}^2\text{आ}} + \frac{\text{गम}^2}{\text{ज्या}^2\text{का}}$$

$$=\text{गम}^2\left(\frac{१}{\text{ज्या}^2\text{आ}}+\frac{१}{\text{ज्या}^2\text{का}}-\frac{२\text{कोज्यागा}}{\text{ज्याआ.ज्याका}}\right)$$

$$\therefore \text{प्रद्वि}=\text{गम}\sqrt{\text{कोछे}^2\text{आ}+\text{कोछे}^2\text{का}-२\text{कोछेआ.कोछेका.कोज्यागा}}$$

$$=\text{अ}\sqrt{\frac{१}{\text{ज्या}^2\text{आ}}+\frac{१}{\text{ज्या}^2\text{का}}-२\,\text{कोज्यागा}\times\frac{१}{\text{ज्याआ. ज्याका}}}$$

अत्र हस्तादिमानानयनार्थं 'लघुरिक्थ'-सारिणीतः प्रघातमापक-रूपायास्य खण्डचतुष्टयं कृतम् । अ, $\frac{१}{\text{ज्या}^2\text{आ}}$, $\frac{१}{\text{ज्याका}}$, $\frac{२\text{कोज्यागा}}{\text{ज्याआ.ज्याका}}$ ।

$$\frac{१}{\text{ज्या}^2\text{आ}}=\text{क},\ \frac{१}{\text{ज्या}^2\text{आ}}=\text{ग},\ \frac{२\text{कोज्यागा}}{\text{ज्याआ.ज्याका}}=\text{घ}$$

$\therefore \text{प्रघा}_{\text{द}}\text{क}=२० - \text{प्रघा}_{\text{द}}२\text{ज्याआ}$, $\text{प्रघा}_{\text{द}}\text{ग}=२० - \text{प्रघा}_{\text{द}}२\text{ज्याका}$,

$\text{प्रघा}_{\text{द}}\text{घ}=\text{प्रघा}_{\text{द}}२+\text{प्रघा}_{\text{द}}\text{कोज्यागा}+१० - \text{प्रघा}_{\text{द}}\text{ज्याआ} - \text{प्रघा}_{\text{द}}\text{ज्याका}$ ।

$$\therefore \text{प्रघा}_{\text{द}}\text{क}=२०-२(८\cdot७०९०४९०)=२० - १७\cdot४१८०९८०$$

$$=२\cdot५८१९०२०\ \therefore \text{क}=३२४\cdot२८६२ ।$$

$$\text{प्रघा}_{\text{द}}\text{ग}=२० - २(८\cdot७४४५३६०)=२० - १७\cdot४८९०७२०$$

$$=२\cdot५१०९२८०\ \therefore \text{ग}=३८१\cdot८५८२$$

$$\text{प्रघा}_{\text{द}}\text{घ}=\cdot३०१०३००+९\cdot९९३७६७९+१० - ८\cdot७०९०४९० - ८\cdot७४४५३६०$$

$$=२०\cdot२९४७९७९ - १७\cdot४५३९८५० = २\cdot८४१२१२९$$

$$\therefore \text{घ}=६९३\cdot७६९९$$

$$\therefore \text{प्रद्वि}=\text{अ}\sqrt{\text{क}+\text{ग}-\text{घ}}$$

$$=१००\sqrt{३२४\cdot२८६२+३८१\cdot८५८२-६९३\cdot७६९९}$$

$$=१००\sqrt{७०६\cdot१४४४-६९३\cdot७६९९}$$

$$=१०० \sqrt{१२\cdot३७८५}=१०० \times ३\cdot५१८७$$
$$=३५१\cdot८७\ldots\ldots ।$$

प्रश्नान्ते उत्तरम् ३५४·३४९ इदमशुद्धम् ।

## (१५) प्रश्नस्योत्तरम् ।

अत्र पूर्वा-परायता पूल-मितद्वादशहस्तोच्छ्रिता पूलतमू-भित्तिस्तथा द्वादशहस्तोच्छ्रितैव याम्योत्तरा छयदमू भित्तिरन्या पश्चिमदिशि संलग्नाऽस्ति इष्टसमये पूर्वकपाले द्वयोर्भित्त्योश्छाये समानभूमौ पतिते । ययोः पूर्वापरभित्तेश्छाया क-मितोत्तरस्यां दिशि पतिता तथा याम्योत्तरभित्तेश्छाया ग-मिता पश्चिमस्यां दिशि पतिता । अत्र रवेरुन्नतांशास्तत्र दिगंशाश्च के इति प्रश्नः । इह क-मितो भुजः, ग-मिता कोटिः, मूच-मितः कर्णः । वास्तविको भुजश्च क, ग-मिता कोटिस्तयो वास्तविकी छाया मूच-मिता $= \sqrt{क^२+ग^२}$ । अथ मूचअ-जात्यत्रिभुजे

$$ज्या\angle चमूअ = ज्यादि = \frac{१ \times चअ}{मूच} = \frac{१ \times क}{\sqrt{क^२+ग^२}}$$

अत्र $\sqrt{क^२+ग^२} = \sqrt{४^२+३^२} = \sqrt{२५} = ५$ ।

$\therefore$ ज्यादि $= \frac{१ \times क}{५}$ $\therefore$ प्रघातमापकरूपे

$$प्रघा_{\text{द}}ज्यादि = प्रघा_{\text{द}}क + १० - प्रघा_{\text{द}} ५$$
$$= \cdot६०२०६०० + १० - \cdot६९८९७०० = ९\cdot९०३०९००$$

$\therefore$ पूर्वकपाले उत्तरा दिगंशाः $=$ ज्या$^{-1}\cdot \frac{\text{फ}}{\sqrt{\text{क}^2+\text{ग}^2}}$

$=$ ज्या$^{-1}\cdot$ ९·९०३०९०० $=$ ५३° । ७' । ४८" ।

अथोन्नतांशार्थमुपायः । पूर्वोक्तक्षेत्रे मूच-मितैव छाया भुजो द्वादश कोटिरनयोर्वर्गान्तरपदं कर्णः, एवं दृग्ज्या भुज उन्नतांशज्या शङ्कुः कोटिस्त्रिज्या कर्णस्थानयोः क्षेत्रयो. साजात्यं प्रसिद्धमतः

$\frac{\text{द्वाद}}{\text{छाया}} = \frac{\text{ज्याउन्न}}{\text{ज्याद्द}} =$ स्पउन्न ।

$\therefore$ स्पउन्न $= \frac{\text{द्वाद}}{\text{छाया}} = \frac{\text{अ}}{\sqrt{\text{क}^2+\text{ग}^2}}$

$\therefore$ प्रघा$_{\text{द्व}}$स्पउन्न $=$ प्रघा$_{\text{द्व}}$अ $+$ १० $-$ प्रघा$_{\text{द्व}}$५

$=$ १·०७९१८१२ $+$ १० $-$ ·६९८९७००

$=$ १०·३८०२११२ । $\therefore$ उन्नतांशाः $=$ स्प$^{-1}\cdot \frac{\text{अ}}{\sqrt{\text{क}^2+\text{ग}^2}}$

$=$ स्प$^{-1}\cdot$ १०·३८०२११२ $=$ ६७° । २२' । ४८" ।

## (१६) प्रश्नस्योत्तरम् ।

कल्प्यतामिह पूर्वापरा अ-हस्तोच्छ्राया धमू-भित्तिरस्ति तथा तदुच्छ्रायैवान्योत्तरभागे पू-पूर्वचिह्नात् आ-कोणान्तरे गता मूउ-भित्तिरस्ति ययोश्छाया धमू-भित्तेर्दक्षिणतस्तथा मूउ-भित्तेरुत्तरपश्चिमतश्च मिलिता पूजवाघनमू-रूपा भूमौ पतिता। तत्र मूधभित्तेश्छायाविस्तृतिः मूइ-रेखा क-मिता तथाऽन्यभित्तेश्छायाविस्तृतिः मूभ-रेखा ग-मिता, एते छाये तथा पूमूदि-कोणो वा तत्तुल्य इवाअ-कोणश्चेति त्रयं ज्ञात्वा दिगंशा उन्नतांशाश्च कियन्त इति प्रश्नः।

अत्र वाअमू-कोणस्तथा वाइमू-कोणश्च नवत्यंशमितोऽतः अवाइमू-चतुर्भुजं वृत्तान्तर्गतम्। तत्र अवाइ-कोणः आ-मितोऽतः $१८० - आ = \angle$ इमूअ।

$$\therefore - \text{कोज्याआ} = \frac{क^2 + ग^2 - अइ^2}{२कग}$$

$$\because अइ = \sqrt{क^2 + ग^2 + २क.ग.\text{कोज्याआ}}$$

उक्तचतुर्भुजस्य वृत्तान्तर्गतत्वात् $\angle$इअमू $= \angle$इवामू, किन्तु इवामू $= \angle$पूमूदि $=$ दिगंशाः।

$\therefore \angle$इवामू $=$ दिगंशाः।

$$\therefore \text{ज्यादि} = \frac{\text{ज्याआ} \times क}{\sqrt{क^2 + ग^2 + २क.ग.\text{कोज्याआ}}}$$

अत्र हरस्वरूपम् $= \sqrt{३^2 + ४^2 + २ \times ३ \times ४ \times \text{कोज्याआ}}$।

$\therefore इ^2 = २५ + २४ \times \text{कोज्याआ}$।

$= २५ + २४ \times \cdot३८२६८३४$

$= २५ + ९\cdot१८४४०१६ = ३४\cdot१८४४०१६$।

$\therefore \sqrt{३४\cdot१८४४०१६} = ५\cdot८४६७...$

$\therefore$ ज्यादि $= \dfrac{\text{ज्याआ.क}}{५\cdot८४६७\ldots} = \dfrac{\cdot९२३८७९५\times३}{५\cdot८४६७\ldots}$

$= \dfrac{२\cdot७७१६३८५}{५\cdot८४६७\ldots} = \cdot४७४०५१७\ldots\ldots$

$\therefore$ दिगंशा उत्तरा: $=$ २८ । १७ ............ ।

अथोन्नतांशाः साध्यन्ते । वास्तविकी छाया वामू-मिता

$= \dfrac{\text{क}\times१}{\text{ज्यादि}}$ ( वाइमू-क्षेत्रे द्रष्टव्यम् ).

$= \dfrac{\text{क}\times१\ \sqrt{\text{क}^२+\text{ग}^२+२\text{क.ग.कोज्याआ}}}{\text{ज्याआ.क}}$

$= \dfrac{१\times\sqrt{\text{क}^२+\text{ग}^२+२\text{क.ग.कोज्याआ}}}{\text{ज्याआ}}$

$\therefore$ स्पउन्न $= \dfrac{\text{अ.ज्याआ}}{\sqrt{\text{क}^२+\text{ग}^२+२\text{क.ग.कोज्याआ}}}$

[ अत्र अ = १२हस्ताः शङ्कुर्हस्तात्मकः कल्पितः ] ।

$= \dfrac{१२\times\cdot९२३८७९५}{५\cdot८४६७\ldots} = \dfrac{११\cdot०८६५५४०}{५\cdot८४६७०००}$

$= \dfrac{११०८६५५४}{५८४६७००} = १\cdot८९६२०७१$

$\therefore$ उन्नतांशाः पूर्वकपालीयाः $=$ ६२°।११'......................।

## ( १७ ) प्रश्नस्योत्तरम् ।

कल्प्यते अवाकृतीरस्थ: सरलप्रदेश: कग = १७५, कघ = ६०, गघ = २१४, गच = ९०, कच = २१५, एभ्य: अल-प्रमाणो नदा वि-स्तारोऽपेक्ष्य: ।

(३८ प्रक्रमत:) कगच-त्रिभुजे कोज्या $\angle \text{कगच} = \dfrac{\text{कच}^2 - \text{कग}^2 - \text{गच}^2}{२\text{कग}.\text{गच}}$

$$= \frac{(२१५^2) - (१७५^2 + ९०^2)}{२ \times १७५ \times ९०} = \frac{७५००}{३१५००}$$

$= \cdot २३८०९५२\ldots$ $\therefore \angle \text{अगक} = ७६^\circ \mid १३' \mid ३३'' \mid$

एवम् कोज्या $\angle \text{गकघ} = \dfrac{\text{घग}^2 - \text{कघ}^2 - \text{कग}^2}{२\text{कघ}.\text{कग}}$

$$= \frac{(२१४^2) - (१७५^2 + ६०^2)}{२ \times १७५ \times ६०} = \frac{११५७१}{२१०००} = \cdot ५५१$$

$\therefore \angle \text{अकग} = ५६^\circ \mid ३३' \mid ८'' \mid$ $\therefore \angle \text{अगक} + \angle \text{अकग}$

$= (७६^\circ \mid १३' \mid ३३'') + (५६^\circ \mid ३३' \mid ८'') = १३२^\circ \mid ४६' \mid ४१'' \mid$

$\therefore \angle \text{कअग} = ४७^\circ \mid १३' \mid १९'' \mid$

$$\therefore \text{अग} = \frac{१७५ \times \text{ज्या}(५६^\circ \mid ३३' \mid ८'')}{\text{ज्या}(४७ \mid १३' \mid १९'')}$$

$\therefore$ अगल-त्रिभुजऽनुपाततः

$$\text{अल} = \frac{१७५ \times \text{ज्या}(५६^\circ \mid ३३' \mid ८'')\ \text{ज्या}(७६^\circ \mid १३' \mid ३३'')}{१ \times \text{ज्या}(४७^\circ \mid १३' \mid १९'')}$$

$\therefore$ प्रघातमापकरूपम्—

$\text{प्रघा}_{\text{द}}\text{अल} = \text{प्रघा}_{\text{द}}१७५ + \text{प्रघा}_{\text{द}}\text{ज्या}(५६^\circ \mid ३३') + \text{प्रघा}_{\text{द}}\text{ज्या}(७६^\circ \mid १४') - १० - \text{प्रघा}_{\text{द}}\text{ज्या}(४७^\circ \mid १३')$

$$= \left\{ \begin{array}{ll} + २\cdot २४३०३८५ & - १० \\ + ९\cdot ९८७३४१२ & \underline{- ९\cdot ८६५६५३१} \\ \underline{+ ९\cdot ९२१३५७२} & - १९\cdot ८६५६५३१ \\ + २२\cdot १५१७३७० & \end{array} \right\}$$

$$=(+२२\cdot१५१७३७०-१९\cdot८६९६५३१)=२\cdot२८६०८३९$$

$\therefore$ अळ $=१९३\cdot२३३$ हस्ताः, इदमेव पात्रप्रमाणम् । प्रश्नान्ते पात्रप्रमाणम् $=२००\cdot८६२८$ हस्ताः, इदमशुद्धम् ।

## ( १८ ) प्रश्नस्योत्तरम् ।

कल्प्यतेऽत्र क्रमनिम्नाया मपत-भूमेरुच्चप्रदेशे म-स्थाने स्थितस्य हस्तशतोच्छ्रितस्य मअ-वृक्षस्य मूलं म, अमम्=अ । वृक्षमूलप्रदेशात् प स्थाने हस्तशतद्वयान्तरे काचिद्वापी । अ-अग्रस्थानस्थयोर्वानरयोरेकतरो वृक्षादवतीर्य प्रवणभूम्याश्रयत पत्र वापीं गतः । अन्यतरश्च किञ्चिदुड्डीय कर्णगत्या तां वापीं गतः । द्वयोर्वानरयोर्गती यदि समाने कल्प्येते तदोड्डीनमानं कियदिति प्रश्नः । अम $=$ अ, मप $=$ क, अउ $=$ य

प्रश्नानुसारतः अम $+$ मप $=$ पउ $+$ अउ $\therefore$ पउ $=$ मप $+$ अम $-$ अउ । प्रावण्यकोणः $\angle$मपत $=२०^\circ=$ आ $\therefore$ $\angle$पमत $=९०-$ आ $=७०^\circ$

$\therefore$ $\angle$पमउ $=१८०^\circ-(९०^\circ-$ आ $)=९०^\circ+$ आ

अत (३८)प्रकरणतः कोज्या $\angle$पमउ $=-$ज्याआ $=\dfrac{\text{पउ}^2-\text{पम}^2-\text{मउ}^2}{२\text{पम}.\text{मउ}}$

$\therefore$ पउ$^2=$ मप$^2+$ मउ$^2+२$ज्याआ.मप.मउ । किन्तु

पउ $=$ मप $+$ अम $-$ अउ $\therefore$ पउ$^2=($ मप $+$ अम $-$ अउ $)^2$

= $\underline{\text{मप}}^2 + \underline{\text{अम}}^2 + \underline{\text{अउ}}^2$ + २पम.अम − २पम.अउ − २अम.अउ

= $\overline{\text{मप}}^2$ + मउ$^2$ + २ज्याआ.मप.मउ

= मप$^2$ + (अउ + अम)$^2$ + २ज्याआ.मप(अउ + अम)

= $\underline{\text{मप}}^2 + \underline{\text{अउ}}^2 + \underline{\text{अम}}^2$ + २अउ.अम + २ज्याआ.मप(अउ + अम)

∴ २मप.अम − २मप.अउ − २अम.अउ

= २अउ.अम + २ज्याआ.मप(अउ + अम )

= २अउ.अम + २ज्याआ.मप.अउ + २ज्याआ.मप.अम

∴ २पम.अम − २ज्याआ.मप.अम

= २अउ.अम + २पम.अउ + २अम.अउ + २ज्याआ.मप.अउ

= ४अउ.अम + २पम.अउ + २ज्याआ.मप.अउ।

२अम( मप − ज्याआ.मप )

= अउ( ४अम + २मप + २ज्याआ.मप )

= २अम.मप( १ − ज्याआ )

= अउ { ४अम + २मप( १ + ज्याआ ) }

∴ अउ = उड्डीनमानम् = $\dfrac{\text{अम.मप( १ − ज्याआ )}}{\text{२अम + मप(१ + ज्याआ)}}$

= $\dfrac{\text{अ.क( १ − ज्याआ )}}{\text{२अ + क(१ + ज्याआ)}}$

अस्य गणितम्।

उड्डीनमानम् = अउ = य = $\dfrac{\text{अ.क(१−ज्याआ)}}{\text{२अ + क(१ + ज्याआ)}}$

= $\dfrac{\text{१०० × २०० ( १ − ·३४२०२०१ )}}{\text{२ × १०० + २०० (१ + ·३४२०२०१)}}$

= $\dfrac{\text{२०००० ( ·६५७९७९९ )}}{\text{२०० + २०० + २०० (·३४२०२०१)}}$ = $\dfrac{\text{१३१·५९५९८००}}{\text{४·६८४०४०२}}$

= २८·०९४५४५।

## ( १९ ) प्रश्नस्योत्तरम् ।

अत्र कल्प्यते कग = सरलप्रदेशः = क, मअ = वंशः, यस्य मूलबिन्दुः = म, अग्रबिन्दुः = अ, कग-प्रदेशस्य मध्यप्रदेशः = च-बिन्दुः । ∠मकअ = ∠मगअ = आ । ∠मचअ = का, ∠कमअ = ∠गमअ = ∠चमअ = ९०°, सरलभूमितलोपरि वंशस्य लम्बरूपत्वात् ।

मअ = वंशः = या ।

$$\therefore \frac{\text{या.कोज्या आ}}{\text{ज्या आ}} = \text{कम},$$ कमग-त्रिभुजस्य समद्विबाहुकत्वात्

सरलप्रदेशार्धबिन्दुतो वंशमूलपर्यन्तं चम-रेखा कग-रेखोपरि लम्बरूपा

$$\therefore \text{चम}^2 = \text{कम}^2 - \left(\frac{\text{कग}}{२}\right)^2 = \frac{\text{या}^2\text{. कोज्या}^2\text{आ}}{\text{ज्या}^2\text{आ}} - \frac{\text{कग}^2}{४}$$

$$= \frac{\text{या}^2\text{. कोज्या}^2\text{आ} \times ४ - \text{ज्या}^2\text{आ. कग}^2}{४\text{ज्या}^2\text{आ}}$$ । अमच-त्रिभुजे

$$\text{चम} = \frac{\text{या} \times \text{कोज्या का}}{\text{ज्या का}}, \therefore \text{चम}^2 = \frac{\text{या}^2 \times \text{कोज्या}^2\text{का}}{\text{ज्या}^2\text{का}}.$$

$$\therefore \frac{\text{या}^2\text{. कोज्या}^2\text{आ} \times ४ - \text{ज्या}^2\text{आ. कग}^2}{४\text{ ज्या}^2\text{आ}} = \frac{\text{या}^2 \times \text{कोज्या}^2\text{का}}{\text{ज्या}^2\text{का}}$$

$$\therefore \text{या}^2\text{.४कोज्या}^2\text{आ.ज्या}^2\text{का} - \text{ज्या}^2\text{आ.ज्या}^2\text{का.कग}^2$$

$$= \text{या}^2 \times \text{४ज्या}^2\text{आ.कोज्या}^2\text{का}$$

$$\therefore \text{या}^2\text{.४कोज्या}^2\text{आ.ज्या}^2\text{का} - \text{या}^2\text{.४ज्या}^2\text{आ.कोज्या}^2\text{का}$$

$= ज्या^2आ.ज्या^2का.कग^2$

$= ४या^2 ( कोज्या^2आ.ज्या^2का - ज्या^2आ.कोज्या^2का )$

$= ४या^2 ( कोज्याआ.ज्याका + ज्याआ.कोज्याका ) \times$

$( कोज्याआ.ज्याका - ज्याआ.कोज्याका )$

$= ४या \left[ ज्या( आ + का ) \right] \left[ ज्या( आ - का ) \right]'$

$$\therefore या = \frac{\frac{कग}{२} ज्याआ.ज्याका}{\sqrt{ज्या( आ + का ) ज्या( आ - का )}}$$

$$= \frac{\frac{अ}{२} ज्याआ.ज्याका}{२ \sqrt{ज्या( आ + का ) ज्या( आ - का )}}$$

$$\therefore चम = दूरत्वम् = \frac{अ.कोज्याका.ज्याआ.ज्याका}{२\sqrt{ज्या(आ + का) ज्या(आ - का)}}$$

## ( २० ) प्रश्नस्योत्तरम् ।

अं
क ग
य
क-य
आ
अ

अ, क, ग त्रीणि स्थानानि कल्प्यन्ते । तत्र अ-स्थानात् क-स्थानं प्राच्यां वर्त्तते । अ-स्थानात् ग-स्थानं च आ-अंशान्तरे क-स्थानतो दक्षिणभागे अं-हस्तमितान्तरे तिष्ठति । ग-स्थानं प्राप्यमस्ति किन्तु क-स्थानाद् दक्षिणगमनमशक्यमतो ग-स्थानं लिप्सुर्जनः क-स्थानात् अ-स्थानं प्रत्यक् गत्वा आ-अंशान्तरेण चलितो ग स्थानं लब्ध. । अत्र

अस्य चलनप्रदेशः अक + अग = क । अक = य ∴ अग = क − य ।

$$(\text{३८ प्रश्नतः})\ \text{कोज्याआ} = \frac{\text{य}^{२} + (\text{क} - \text{य})^{२} - \text{अं}^{२}}{\text{२य}(\text{य} - \text{क})}$$

$$\therefore \text{२य}(\text{क} - \text{य})\text{कोज्याआ} = \text{य}^{२} + (\text{क} - \text{य})^{२} - \text{अं}^{२}$$

$$\therefore \text{अं}^{२} = \text{य}^{२} + (\text{क} - \text{य})^{२} - \text{२य}(\text{क} - \text{य})\text{कोज्याआ}$$

$$= \text{य}^{२} + \text{क}^{२} + \text{य}^{२} - \text{२क.य} - \text{२क.य.कोज्याआ} + \text{२य}^{२}\text{.कोज्याआ}$$

$$= \text{क}^{२} + \text{२य}^{२} + \text{२य}^{२}\text{.कोज्याआ} - (\text{२क.य} + \text{२क.य.कोज्याआ})$$

$$= \text{क}^{२} + \text{२य}^{२}(\text{१} + \text{कोज्याआ}) - \text{२कय}(\text{१} + \text{कोज्याआ})$$

$$= \text{क}^{२} + (\text{२य}^{२} - \text{२कय})(\text{१} + \text{कोज्याआ})$$

$$\therefore \text{२य}^{२} - \text{२कय} = \frac{\text{अं}^{२} - \text{क}^{२}}{\text{१} + \text{कोज्याआ}}$$

$$\therefore \text{४य}^{२} - \text{४क.य} + \text{क}^{२} = \frac{\text{२अं}^{२} - \text{२क}^{२} + \text{क}^{२} + \text{क}^{२}\text{.कोज्याआ}}{\text{१} + \text{कोज्याआ}}$$

$$= \frac{\text{२अं}^{२} - \text{क}^{२} + \text{क}^{२}\text{.कोज्याआ}}{\text{१} + \text{कोज्याआ}} = \frac{\text{२अं}^{२} - \text{क}^{२}(\text{१} - \text{कोज्याआ})}{\text{१} + \text{कोज्याआ}}$$

अत्र $\text{१} + \text{कोज्याआ} = \text{२कोज्या}^{२}\frac{\text{१}}{\text{२}}\text{आ}$

$$\therefore \text{२य} - \text{क} = \frac{\sqrt{\text{२अं}^{२} - \text{क}^{२}\frac{\text{१}}{\text{२}}\text{ज्याआ}}}{\text{कोज्या}\frac{\text{१}}{\text{२}}\text{आ}}$$

$$\therefore \text{य} = \frac{\text{१}}{\text{२}}\text{क} \pm \frac{\sqrt{\text{अं}^{२} - \text{क}^{२}.\frac{\text{१}}{\text{२}}\text{ज्याआ}}}{\text{२कोज्या}\frac{\text{१}}{\text{२}}\text{आ}}$$

एतदेव क-स्थानात् अ-स्थानस्यान्तरम् ।

$$\therefore \text{क} - \text{य} = \frac{\text{१}}{\text{२}}\text{क} \mp \frac{\sqrt{\text{अं}^{२} - \text{क}^{२}.\frac{\text{१}}{\text{२}}\text{ज्याआ}}}{\text{२कोज्या}\frac{\text{१}}{\text{२}}\text{आ}}$$

एतत् अ-स्थानात् ग-स्थानस्यान्तरम् ।

॥ इति ॥

# विज्ञापनम् ।

अस्तु निवेदनं समार्थनं सर्वेषां सज्जनानां पुरतो यदिह कार्यालये वेद-वेदाङ्ग-(व्याकरण ज्यौतिप-निरूक्त धर्मशास्त्र-वेदभाष्य-छन्दःशास्त्र) षड्दर्शनपुराणोपपुराणेतिहास-रामायण-काव्य नाटक चम्पू-प्रभृति-सर्वविषयकाणि मुम्बयी पूना कलिकाता-काशीस्थ-यन्त्रालयेषु समुद्रितानि पुस्तकानि लभ्यन्ते ।

अत्रेदमवगच्छन्तु विद्वांसो यदस्मात् कार्यालयाद्यानि पुस्तकानि प्रेष्यन्ते तेषां प्रत्येकं पत्रं चावलोक्य दैवात् कण्टकादिदोषतो यदि कुत्रापि पत्र वैकृत्यादि प्राप्यते तदा तत् ततो निरस्य तत्स्थानेऽन्यत् सुदृढ सन्निवेश्य मनोहराकारे समुल्लिखितस्थानेषु समुचितमूल्येनैव सावधानतया पुस्तकानि "भी. पी." द्वारा प्रेष्यन्ते यथाऽस्मद्ग्राहकाणां कथमपि हानिर्न भवेत् । सद्व्यवहारत एव वणिजः सत्यताऽभिलक्ष्यतेऽलमधिकप्रशंसया किन्त्वियं प्रार्थना यत् पुस्तकलिप्सुना स्वनामग्राम-'पो.आ.-जिला' एतत् सुस्पष्टं स्वपत्रे लेखनीयम् ।

पुस्तकप्राप्तिस्थानम् — श्रीहरिकृष्णदास,
मालिक, "गुप्तबुकडीपो"
कचौरीगली, बनारस सिटी ।